# मशककल्पसूत्र

क्लृप्तो ज्योतिष्टोमोऽतिरात्रोऽषोडशिकः १-१-१

पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुत उपास्मै गायता नर उपो षु जातमप्तुरं दविद्युतत्या रुचैते आसृग्रमिन्दवः पवमानस्य ते वयं पवमानस्य ते कव उप प्र यन्तो अध्वरं प्र वो मित्राय गायतेन्द्रा याहि चित्रभानो इन्द्रे अग्ना नमो बृहद्बृशा पवस्व धारयेति गायत्रं चामहीयवं चैडं च सौपर्णं रोहितकूलीयं च पुनानः सोम धारयेति समन्तं तिसृषु समन्तमेकस्यां प्लव एकस्यां दैर्घश्रव-समेकस्यामिति वा रथंतरं तिसृषु गौङ्गवँ रौरवं त्रिणिधनमायास्यं त एकर्चाः प्र काव्यमुशनेव ब्रुवाण पार्थमन्त्यं बृहच्च वामदेव्यं च मा चिदन्य-द्विशँसतेत्यभीवर्तः स्वासु कालेयं यस्ते मदो वरेणय इति गायत्रं मौक्षं जराबोधीयं पवस्वेन्द्रमच्छेति सफसुज्ञाने पुरोजिती वो अन्धस इति गौरीवितं च क्रौञ्चं च प्रो अयासीदिति कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसामाग्निं वो वृधन्तमिति सत्रासाहीयँ सौभरमुद्वँशीयं चतुर्विँश स्तोमः १-१-२

उपास्मै गायता नरः पवमानस्य ते वयं पवमानस्य ते कवे अग्न आ याहि वीतय इत्याज्यानि प्र सोमासो विपश्चित इति गायत्रं चाश्वं च प्र सोम देववीतय इति पज्रं च यौधाजयं चौशनमन्त्यँ रथंतरं च वामदेव्यं च तं वो दस्ममृतीषहमित्यभीवर्तः स्वासु कालेयँ स्वादिष्ठया मदिष्ठयेति गायत्रसँहिते अया पवस्व देवयुः पवते हर्यतो हरिरिति सफसुज्ञाने काशीतं वै प्र सुन्वानायान्धस इति गौरीवितं तिसृषु गौरीवितमेकस्यामौष्णिहमोकोनि-धनमेकस्यामौदलमेकस्यामिति वा साध्रं तिसृषु कावमन्त्यं यज्ञायज्ञीयम-ग्निष्टोमसाम ज्योतिष्टोम स्तोमः १-२

पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुतो वृषा सोम द्युमाँ असि वृषा ह्यसि भानुना पवमानस्य ते कवे अग्निं दूतं वृणीमह इत्याज्यानि वृषा पवस्व धारयेति गायत्रं च हाविष्मतं च यौक्ताश्वमुत्तरेषु यदुत्तरं परीतो षिञ्चता सुतमिति

माधुच्छन्दसं च भर्गश्च यशो वायास्ये वृषा शोण इति पार्थमन्त्यं बृहच्च वामदेव्यं चाभि प्र वः सुराधसमित्यभीवर्तः स्वासु कालेयं यस्तेमदो वरेण्य इति गायत्रमौक्षे हाविष्मतमुत्तरेषु पवस्वेन्द्रमच्छेति शङ्कु सुज्ञाने अयं पूषा रयिर्भग इति गौरीवितं च क्रौञ्चं च वृषा मतीनां पवत इति याममन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम साकमश्व मभ्रातृव्यो अना त्वमित्यामहीयवमाष्टादँष्ट्रं यदुहोवद्गोष्टोम स्तोमः १ ३

दविद्युतत्या रुचैते असृग्रमिन्दवः पवमानस्य ते कवे अग्निनाग्निः समिध्यत इत्याज्यान्युच्चा ते जातमन्धस इति गायत्रं च वैरुपं चाभि सोमास आयव इति रौरवं च गौतमं चाञ्जश्च वैरूपमग्नेस्त्रिणिधनं तिस्रो वाच इत्यङ्गिरसाँ संक्रोशोऽन्त्यो रथंतरं च वामदेव्यं चा त्वा सहस्रमा शतमित्यभीवर्तः स्वासु कालेयं तिस्रो वाच उदीरत इति गायत्रं च क्षुल्लकवैष्टम्भं चासोता परि षिञ्चत सखाय आ निषीदतेति वाचश्च साम सुज्ञानं च दैवोदासं वा सुतासो मधुमत्तमा इति गौरीवितं चान्धीगवं च पवित्रं त इति सामराजमन्त्यं यज्ञायज्ञीयमग्नि-ष्टोमसाम स्वान्युक्थान्यायुष्टोम स्तोमः १-४

पवमानो अजीजनत् पुनानो अक्रमीदभि प्र यद्गावो न भूर्णयः पवमानस्य ते कवे अग्निर्वृत्राणि जङ्घनदिति होतुराज्यँ स्वान्युत्तराणि पवस्व दक्षसाधन इति गायत्रं चादारसृच्च परीतो षिञ्चता सुतमिति पृश्नि चाथर्वणं चाभीशवं च यौधाजयं चोहु वा अस्येति वासिष्ठम् अन्त्यं बृहच्च वामदेव्यं च यो राजा चर्षणीनामित्यभीवर्तः स्वासु कालेयं परि प्रिया दिवः कविरिति गायत्रं चौर्णायवं च यदीनिधनं त्वँ ह्यङ्ग दैव्य सोम पुनान ऊर्मिणेति बृहत्कसुज्ञाने पुरोजिती वो अन्धस इति गौरीवितं च त्वाष्ट्रीसाम च यदूर्ध्वेदं प्रो अयासीदिति लौशमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम सैन्धुक्षितँ सौभरं वीङ्कँ शुद्धाशुद्धीयं वा यदीडाभिरैडं गोष्टोम स्तोमः १-५

पवमानस्य विश्वजिद् यत्सोम चित्रमुक्थ्यं पवमानस्य ते कवे अग्ने स्तोमं मनामह इति होतुराज्यं स्वान्युत्तरान्यित्याज्यानि अर्षा सोम द्युमत्तम इति गायत्रं च यणवं चापत्यँ सन्तनि शाक्वरवर्णं तान्युत्तरेष्वभिसोमास आयव इति मानवं चानूपं च वारं चाग्नेस्त्रिणिधनमभि त्रिपृष्ठमिति सम्पान्त्या रथंतरं च वामदेव्यं

च त्वमिन्द्र यश असित्यभीवर्तः स्वासु कालेयमसाव्यँशुर्मदायेति गयत्रं च गौषूक्तं चाभि द्युम्नं बृहद्यशः प्राणा शिशुर्महीनामिति च्यावनसुज्ञाने दैवोदासं वा पवस्व वाजसातय इति गौरीवितं च रयिष्ठं चासावि सोमो अरुषो वृषा हविरिति द्व्यभ्याघातं लौशमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम यजिष्ठं त्वा ववृमह इति सध्यँ सांवर्तं मारुतमायुष्टोम स्तोमः १-६

असृक्षत प्र वाजिन एतमु त्यं दश क्षिपः पवमानस्य ते कवे यमग्ने पृत्सु मर्त्यमिति होतुराज्यँ स्वान्युत्तराणी न्द्रायेन्दो मरुत्वत इति गायत्रं चाश्वसूक्तं च सकृदिषोवृधीयं कुर्यान् मृज्यमानः सुहस्त्येत्यैडं चौद्दणोरन्ध्रं त्रिणिधनमायास्यँ सकृत्समन्तं कुर्यात् साकमुक्ष इतीहवद्वासिष्ठमन्त्यं बृहच्च वामदेव्यं च पिबा सुतस्य रसिन इत्यभीवर्तः स्वासु कालेयं परि स्वानो गिरिष्ठा इति गायत्रं चैध्मवाहं च यदिहवत् स सुन्वे यो वसूनां तं वः सखायो मदायेति दीर्घसुज्ञाने काशीतं वा सोमाः पवन्त इन्दव इति गौरीवितं च क्रौञ्चं च यत्स्वयोनि त्रिरस्मै सप्त धेनवो दुदुह्रिर इति मरुतां धेन्वन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम गूर्दस् त्रैककुभं नार्मेधमित्युक्थानि यद्युक्थ्योऽग्निष्टोमस्त्वेव ज्योतिष्टोम स्तोमः १-७

एवमन्येऽपि त्रयोऽभिप्लवाः कर्तव्याः तेषु विशेषः द्वितीयेऽहनि हाविष्मतस्य स्थाने यौक्ताश्वमुत्तरम् मौक्षस्य हाविष्मतं द्वितीयेऽभिप्लवे पञ्चमेऽहनि यणवस्य स्थानेऽपत्यम् तृतीयेऽभिप्लवे पञ्चमेऽहनि मानवात्पूर्वम्वाम्रं च मानवं चानूपं चेति पञ्चमेऽहनि यदहर्ग्रामेगेयं सन्तनि स्यान् मानवात् पूर्वं वाम्रं स्यादेतच्चाजाम्यर्थं तत्र वाम्रम् प्रथमायां मानवं तृचे चतुर्थेऽभिप्लवे पञ्चमे ऽहनि यणवस्य स्थाने शाक्वरवर्णम् तत्रैव षष्ठेऽहन्याश्वसूक्तस्येषोवृधीयं त्रिणिधनस्य समन्तम् भर्गयशसोर्वौङ्कशुद्धाशुद्धीययोश्च व्यवस्थाप्रकार उक्तो न प्रस्मर्तव्यः अन्यत्सर्वं प्रथमवत् एवं चतुरोऽभिप्लवानुपेत्य पृष्ठ्यं षडहमुपयन्तीति तस्य क्लृप्तिमाह पृष्ठ्यः षडहः समूढो वा व्यूढो वा पृष्ठ्यस्य यद्व्यूढत्वं तद् यदि दशरात्रप्रयुक्तं तत्र समूढोऽयं भवितुमर्हत्यविच्छिन्नत्वात् अथ पृष्ठ्यप्रयुक्तस्ततो व्यूढ इति संदेहाद्विकल्प इति पूर्वः पक्षः सिद्धान्तमाह समूढस्त्वेव दशरात्रप्रयुक्तो व्यूह इत्य् भावः तथा च निदानमथापि विलुप्तो व्यूढः षडह इत्यादि श्रुत्यन्तरं च नर्ते छन्दोमेभ्यः पृष्ठ्यो व्यूहमानश इति तस्य तस्य समूढस्य क्लृप्तिर्वक्ष्यत इत्याह तस्य कल्प इति प्रथममहराह उपास्मै गायता नर उपोषु

जातमप्तुरं पवमानस्य ते कव इति प्रथमस्याह्नो बहिष्पवमानं प्र सोम देववीतय इत्यभीवर्त एकस्यां पञ्चमेकस्यां यौधाजयमेकस्याँ समानमितरं द्वितीयस्याह्नः पुनानः सोम धारयेत्यैदमायास्यमेकस्यामभीवर्त एकस्यां कालेयमेकस्यं वृषा शोण इति पार्थमन्त्यं मध्यंदिनस्य समानमितरं तृतीयस्याह्नो भि सोमास आयव इति पौरुमद्गं प्रथमायां तस्यामेवाभीवर्तः कालेयं द्वितीयायां गौतमं तृतीयायाँ समानमितरम् १-८

चतुर्थस्याह्नः पवमानो अजीजनत्पुनानो अक्रमीदभूति स्तोत्रीयानुरूपाव-ग्निर्वृत्राणि जङ्घनदिति होतुराज्यं तवाहँ सोम रारणेत्याष्टादँष्ट्रमेकस्यामभीवर्त एकस्यां कालेयमेकस्याँ सोमः पवते जनिता मतीनामिति जनित्रमन्त्यं मध्यंदिनस्य प्र त आश्विनीः पवमान धेनव इति लौशमन्त्यमार्भवस्य समान-मितरं १-९-१

पञ्चमस्याह्नः पवमानस्य विश्वजिद्यत्सोम चित्रमुक्थ्यमिति स्तोत्रीयानुरूपावग्ने स्तोमं मनूमह इति होतुराज्यँ सोम उ ष्वणः सोतृभिरिति मानवानुपे तृचयोर्वाम्रमेकस्याम् अभीवर्त एकस्यां कालेयमेकस्यामिन्दुर्वाजी पवते गोन्योघा इति संपान्त्या मध्यांदिनस्य पार्थस्य लोके त्वाष्ट्रीसाम यद् द्व्यनु-तोदं गोवित्पवस्वेति द्व्यभ्याघातं लौशमन्त्यमार्भवस्य समानमितरँ १-९-२

षष्ठस्याह्नो ऽसृक्षत प्र वाजिन एतमु त्यं दश क्षिप इति स्तोत्रीयानुरूपौ यमग्ने पृत्सु मर्त्यमिति होतुराज्यं मृज्यमानः सुहस्त्येति स्वारमौक्ष्णोरन्ध्रं तिसृष्वैडमौक्ष्णोरन्ध्रं एकस्यामभीवर्त एकस्यां कालेयमेकस्यामया पवा पवस्वैना वसूनीतीहवद्वासिष्ठमन्त्यं मध्यं दिनस्य ज्योतिर्यज्ञास्य पवते मधु प्रियम् मरुतां धेन्वन्त्यमार्भवस्य समानमितरँ समानमितरम् १-९-३

पवस्व वाचो अग्रियः पुनानो अक्रमीदभि पवमानस्य ते कवे अग्निं दूतं वृणीमह आ नो मित्रावरुणाभि त्वा वृषभा सुत इन्द्राग्नी आ गतँ सुतमुच्चा ते जातमन्धस इति गायत्रममहीयवँ सत्रासाहीयं पुनानः सोम धारयेत्यभीवर्तो रौरवयौधाजये अभि वायुं वीत्यर्षा गृणान इति पार्थमन्त्यं बृहच्च वामदेव्यं च श्यैतं च कालेयं च स्वादिष्ठया मदिष्ठयेति गायत्रसँहिते पवस्वेन्द्रमच्छेति सफसुज्ञाने पुरोजिती

वो अन्धस इति गौरीवितं तिसृषु गौरीवितमेकस्यां मधुश्चुन्निधनमेकस्याँ श्यावाश्वमेकस्यामिति वान्धीगवं तिसृषु यज्ञायज्ञीयं च बृहच्चाग्नेयं कावमन्त्यं यज्ञायज्ञीयस्यर्क्षु रथंतरमग्निष्टोमसाम सर्वस्तोमस्य सतस्त्र्यावृत स्तोमाश्चतुःप्रणयाः २-१

उपास्मै गायता नर उपो षु जातमप्तुरं तं त्वा नृम्णानि बिभ्रतं पवमानस्य ते वयं पवमानस्य ते कवे अग्न आ याहि वीतय इत्याज्यानि प्र सोमासो विपश्चित इति गायत्रं चाश्वं चाभि सोमास आयव इति पौरुहन्मनं च द्वैगतं च गौङ्गवं च यौधाजयं चौशनमन्त्यं यज्ञायथा अपूर्व्येति रथंतरंतरँ स्वासु वामदेव्यं तं वो दस्ममृतीषहमित्यभीवर्तः स्वासु कालेयँ स्वादिष्ठया मदिष्ठयेति गायत्रं च क्षुल्लकवैष्टम्भं चाया पवस्व देवयुः पवते हर्यतो हरिरिति सफसुज्ञाने काशीतं वा प्र सुन्वानायान्धस इति गौरीवितं तिसृषु गौरीवितमेकस्यां गौतममेकस्यामौदलमेकस्यामिति वा स्वरं तिसृषु यत्पयोनिधनमेवमभि प्रियाणीत्यैडं कावमन्त्यँ स्वारं यदि विकल्पयेद्यज्ञायज्ञीयमग्निष्टोमसामौशनमौपगवं वसिष्ठस्य प्रियं तैरश्चयं वेत्युक्थानि यद्युक्थ्योऽग्निष्टोमस्त्वेव २-२

पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुतो वृषा सोम द्युमाँ असि्युत्ते शुष्मास ईरते पवमानस्य ते कवे अग्निं दूतं वृणीमह इत्याज्यानि वृषा पवस्व धारयेति गायत्रं च यौक्ताश्वं च यत्पृष्ठ्ये परीतो षिञ्चता सुतमिति समन्तं च दैर्घश्रवसं चायास्ये वृषा शोन इति पार्थमन्त्यं मत्स्यपायि ते मह इति बृहत् स्वासु वामदेव्यम् अभि प्र वः सुराधसमित्यभीवर्तः स्वासु कालेयं यस्ते मदो वरेण्य इति गायत्रं च हाविष्मतं च पवस्वेन्द्रमच्छेति शङ्कुसुज्ञाने अयं पूषा रयिर्भग इति गौरीवितं तिसृषु गौरीवितमेकस्यां क्रौञ्चमेकस्याम् आसितमेकस्यामिति वा स्वरं तिसृषु यद्बृहन्निधनयोः पूर्वमुत्तरमावृत्तेषु वृषा मतीनां पवत इति ऐडं याममन्त्यँ स्वारं यदि विकल्पयेद्यज्ञायज्ञीयमग्निस्तोमसाम साकमश्वँ सौभरमाष्टादँष्ट्रमित्युक्थानि यद्युक्थ्योऽग्निष्टोमस्त्वेव २-३

दविद्युतत्यारुचैते असृग्रमिन्दवो राजा मेधाभिरीयते पवस्व वृष्टिमा सु नः पवमानस्य ते कवे अग्निनाग्निः समिध्यत इत्याज्यान्युच्चा ते जातमन्धस इति

गायत्रं चामहीयवं चाभि सोमास ग्रायव इति पौरुमद्गं च गौतमं चान्तरिक्षं चाग्नेश्च त्रिणिधनं तिस्रो वाच इत्यङ्गिरसाँ संक्रोशोऽन्त्यः प्रत्यस्मै पिपीषत इति रथंतरँ स्वासु वामदेव्यं वयं घ त्वा सुतावन्त इत्यभीवर्तः स्वासु कालेयं तिस्रो वाच उदीरत इति गायत्रसँहिते ग्रा सोता परिषिञ्चत सखाय ग्रा निषीदतेति वाचश्च साम सुज्ञानं च दैवोदासं वा सुतासो मधुमत्तमा इति गौरीवितं तिसृषु गौरीवितमेकस्यामान्धीगवमेकस्यां त्वाष्ट्रीसामैकस्यमिति वा स्वरं तिसृषु यत्प्रथमं पवित्रं त इत्यरिष्टमन्त्यँ स्वारँ सामराजं यदि विकल्पयेद्यज्ञा-यज्ञीयमग्निष्टोमसाम प्रमँहिष्ठीयँ हारिवर्णमुद्वँशीयमित्युक्थानि यद्युक्थ्योऽग्नि-ष्टोमस्त्वेव सर्वे सप्तदशाः २-४

उपास्मै गायता नरो । बभ्रवे नु स्वतवसे प्र स्वानासो रथा इव पवमानस्य ते कवे ग्रग्निर्वृत्राणि जङ्घनद्यद् ग्रद्य सूर उदित उद्धेदभि श्रुतामघमियं वामस्य मन्मनो ग्रस्य प्रत्नामनु द्युतमिति गायत्रं भ्राजँ सत्रासाहीयं तवाहँ सोम रारणेत्युत्सेधस्तिसृष्वाभीशवमेकस्यामभीवर्त एकस्यां पृश्न्येकस्याँ रथंतरं तिसृषु शिशुं जज्ञानँ हर्यतं मृजन्तीति पार्थमन्त्यं महादिवाकीर्त्यं च वामदेव्यं चेइन्द्र क्रतुं न ग्रा भरेति विकर्णँ स्वासु कालेयं परि स्वानो गिरिष्ठा इति गायत्रं चाभ्राजं चाभि द्युम्नं बृहद्यशः प्राणा शिशुर्महीनामिति सफश्रुध्ये एकर्चयोः पर्यू ष्विति श्यावाश्वमेकस्यां पुरोजिती वो ग्रन्धस इति बृहत्तिसृषु गौरीवित-मेकस्यामान्धीगवमेकस्यां निषेधमेकस्यां यज्ञायज्ञीयं तिसृषु धर्ता दिव इति कावमन्त्यं मूर्धानं दिवो ग्ररतिं पृथिव्या इति भासं दशस्तोभम-ग्निष्टोमसामैकविँश स्तोम २-५-१

इन्द्र क्रतुं न ग्रा भरेति महावैष्टम्भं श्यैतनौधसे एतानि ब्रह्मसामान्यावृत्तानाँ स्वरसाम्नामभीवर्तलोके पौष्कलँ राथंतरयोः श्रुध्यं बार्हतस्य सुज्ञानलोके २-५-२

उप त्वा जामयो गिरो जनीयन्तो न्वग्रव उत नः प्रिया प्रियासु तत्सवितुर्वरेण्यँ सोमानाँ स्वरणमग्न ग्रा याहि पवसे पवमानस्य ते कवे सुषमिद्धो न ग्रा वह ता नः शक्तं पार्थिवस्य युञ्जन्ति ब्रध्नमरुषं तमीडिष्व यो ग्रर्चिषास्य प्रत्नामनु द्युतमिति गायत्रं चामहीयवं च परीतो षिञ्चता सुतमिति कालेयमेकस्याँ रथंतरं

तिसृषु दैर्घश्रवसं तिसृषु यौधाजयमेकस्यामयं सोम इति पार्थमन्त्यं वैराजं च महानाम्न्यश्च वैरूपं च रेवत्यश्च परि स्वानो गिरिष्ठा इति गायत्रसँहिते पवस्वेन्द्रमच्छेति सत्रासाहीयश्रुध्ये पर्यू ष्विति वामदेव्यं पुरोजिती वो ग्रन्धस इत्यान्धीगवमेकस्यां गौरीवितमेकस्यां यद्वाहिष्ठीयमेकस्यां यज्ञायज्ञीयं तिसृषु परि प्र धन्वेति द्विपदासु वारवन्तीयँ सूर्यवतीषु कावमन्त्यं त्वमग्ने यज्ञानाँ होतेति बृहदग्निष्टोमसाम सर्वस्तोमस्य सतश्चतुरावृत स्तोमास्त्रिःप्रणयाः २-६

पौरुमीढं मानवं जनित्रं भारद्वाजं वासिष्ठं गौङ्गवँ शुद्धाशुद्धीयं वैत एकर्चा ग्रावृत्तस्य पृष्ठ्यस्याभीवर्तलोक इन्द्र क्रतुं न ग्रा भरेति पौरुमीढं मानवं जनित्रं भारद्वाजँ श्यैतनौधसे एतानि ब्रह्मसामान्यावृत्तस्याभिप्लवस्याभीवर्तलोके पौष्कलँ राथंतराणाँ श्रुध्यं बार्हतानाँ सुज्ञानलोके २-७

ज्योतिष्टोममाज्यबहिष्पवमानं गायत्री चाभि सोमास ग्रायव इति द्विहिंकारं च वार्कजम्भं च यद्वहन्निधनं मैधातिथं च रौरवं वा यौधाजयमौशनमन्त्यँ रथंतरं च वामदेव्यं चेन्द्र क्रतुं न ग्रा भरेति नौधसँ स्वासु कालेयँ स्वादिष्ठया मदिष्ठयेति गायत्रसँहिते पवस्वेन्द्रमच्छेति सफपौष्कले पुरोजिती वो ग्रन्धस इति गौरीवितान्धीगवे कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम प्रमँहिष्ठीयँ हारिवर्णमुद्वँशीयमिति उक्थान्यायुष्टोम स्तोमः २-८

पवस्व वाचो ग्रग्रियो दविद्युतत्या रुचा पवस्वेन्दो वृषा सुतो वृषा सोम द्युमाँ ग्रसि पवमानस्य ते कवे ग्रग्निं दूतं वृणीमह इत्याज्यान्यस्य प्रत्नामनु द्युतमिति गायत्रं चाग्रामहीयवं च परीतो षिञ्चता सुतमिति समन्तं च वार्कजम्भं च यदीनिधनं दैर्घश्रवसं च बार्हदुक्थं वा यौधाजयमयँ सोम इति पार्थमन्त्यं बृहच्च वामदेव्यं चेन्द्र क्रतुं न ग्रा भरेति श्यैतँ स्वासु कालेयं यस्ते मदो वरेण्य इति गायत्रमौक्षे पवस्वेन्द्रमच्छेति सफश्रुध्ये पुरोजिती वो ग्रन्धस इति गौरीवितान्धीगवे सूर्यवतीषु कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम साकमश्वँ सौभरमुद्वंशीयमित्युक्थानि गोष्टोम स्तोमः २-९

उपास्मै गायता नर उपो षु जातमप्तुरं पवस्व वाचो ग्रग्रियः पवस्वेन्दो वृषा सुतो दविद्युतत्या रुचैते ग्रसृग्रमिन्दवो यवंयवं नो ग्रन्धसा पवमानस्य ते कवे

होता देवो अमार्त्यस्ता नः शक्तं पार्थिवस्य सुरूपकृत्नुमूतय आ सुते सिञ्चत श्रियमस्य प्रत्नामनु द्युतमिति गायत्रं चामहीयवं च जराबोधीयं च सत्रासाहीयं च परीतो षिञ्चता सुतमिति समन्तं च दैर्घश्रवसं च रौरवयौधजये अयँ सोम इति पार्थमन्त्यं व्रतं पृष्ठं त्रयोदश परिमादो ब्राह्मणक्लृप्ता इन्द्रमिद्गाथिनो बृहद् इन्द्रो दधीचो अस्थभिरुद्धेदभि श्रुतामघमिति त्रिवृच्छिरो गायत्रम् पञ्चदशँ रथंतरं दक्षिणः पक्षः सप्तदशं बृहदुत्तर एकविँशं भद्रं पुच्छं तदिदास भुवनेषु ज्येष्ठमिति पञ्चविँश आत्मा राजनं पञ्चविँशमितरँ सर्वं वामदेव्यं मैत्रावरुणसाम त्रिकद्रुकेषु महिषो यवाशिरमिति पञ्चनिधनं वामदेव्यं ब्रह्मसाम स्वासु कालेयं परि स्वानो गिरिष्ठा इति गायत्रं च स्वाशिरां चार्कः पवस्वेन्द्रमच्छेति सफश्रुध्ये पुरोजिती वो अन्धस इति गौरीवितं च मधुश्चुन्निधनं च श्यावाश्वान्धीगवे सूर्यवतीषु कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम २-१०-१

क्लृप्त उदयनीयोऽतिरात्रो यथा प्रायणीयो यथा प्रायणीयः अथ ये ब्राह्मणेऽध्यायैश्चतुर्भिः षोडशादिभिरेकाह विहितास्तेषां क्लृप्तिस्त्रिभिरिहोच्यते आरंभकालदीक्षोपसद्दिवसदक्षिणादिकं सूत्रे उदगयनपूर्वपक्षेत्याद्यैः पटलैश्च-तुर्भिरुक्तम् २-१०-२

क्लृप्तो ज्योतिष्टोमो ३-१-१

गोर्वर्कजम्भस्य लोके दैर्घश्रवसं दैर्घश्रवसस्य बार्हदुक्थँ स्वासु श्यैतं गौरीवितस्य श्यावाश्वमुद्वंशीयस्य नार्मेधं यदि रात्रिः समानमितरँ सांवत्सरिकेण ३-१-२

आयुषो वार्कजम्भस्य लोके मैधातिथं मैधातिथस्य रौरवँ स्वासु नौधसं गौरीवितस्य श्यावाश्वम् उद्वँशीयस्य नार्मेधं यदि रात्रिः समानमितरँ सांवत्सरिकेण ३-१-३

अभि प्र गोपतिं गिरेत्यभिजितो ब्रह्मण आज्यं यद्यतिरात्रः सामतृचस्य लोके श्यावाश्वं प्रमँहिष्ठीयँ हारिवर्णं नार्मेधं प्रत्यस्मै पिपीषत इति नानदँ षोडशिसाम रात्रिः संधिः समानमितरँ सांवत्सरिकेण ३-१-४

विश्वजितः पवस्वेन्द्रमच्छेति सत्रासाहीयश्रुध्ये सफश्रुध्ये यद्यतिरात्रः सामतृचस्य लोक आन्धीगवं ज्योतिष्टोमोऽतिरात्रः षोडशिमान्त्समानमितरँ सांवत्सरिकेण ३-१-५

व्रतस्या नो विश्वासु हव्यमिति श्यैतं ब्रह्मसाम गौरीवितस्य लोक औदलँ समानमितरँ सांवत्सरिकेण ३-१-६

पवस्व वाचो अग्रियो दविद्युतत्या रुचा पवमानस्य ते कवे अग्न आ याहि वीतय इति राथंतरं त्रीणि बार्हतान्यस्य प्रत्नामनु द्युतमिति गायत्रं चामहीयवं च परीतो षिञ्चता सुतमिति समन्तं च रथंतरं च दैर्घश्रवसं च यौधाजयं चायँ सोम इति पार्थमन्त्यं बृहच्च वामदेव्यं च स्वादोरित्था विषूवत इति श्यैतँ स्वासु कालेयँ स्वादिष्ठया मदिष्ठयेति गायत्रसँहिते पवस्वेन्द्रमच्छेति सफश्रुध्ये पुरोजिती वो अन्धस इति श्यावाश्वान्धीगवे सूर्यवतीषु कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम त्रिवृद्बहिष्पवमानं पञ्चदशत्रिवृन्त्याज्यानि सप्तदशो माध्यंदिनः पवमानो होतुश्च पृष्ठं पञ्चदशं मैत्रावरुणस्य पञ्चविँशं ब्राह्मणाच्छँसिनः सप्तदशमच्छावाकस्यैकविँश आर्भव एकविँशोऽग्निष्टोमः ३-२

एषैवोत्तरस्य क्लृप्तिस्तस्य त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशो माध्यंदिनः पवमानस्त्रीणि च पृष्ठानि पञ्चविँशं ब्राह्मणाच्छँसिनः सप्तदश आर्भव एकविँशोऽग्निष्टोमो ३-३-१

अग्निं दूतं वृणीमह इत्युभयान्याज्यानि श्रायन्तीयं ब्रह्मसाम यस्ते मदो वरेण्य इति गायत्रमौक्ष्णे आन्धीगवादुत्तरमाथर्वनँ साकमश्वँ सौभरं त्रैककुभं वोद्वँशीयमित्युक्थानि चतुर्विँश आर्भव एकविंशोऽग्निष्टोमः सोक्थ्यः समानमितरं पूर्वेण सस्तोमम् ३-३-२

उपास्मै गायता नर उपो षु जातमप्तुरं पवस्व वाचो अग्रियो दविद्युतत्या रुचा पवमानस्य ते कवे अग्न आ याहि वीतये पुरूरुणा चिध्यस्तीन्द्रमिद्गाथिनो

बृहदिन्द्रे अग्ना नमो बृहदुच्चा ते जतमन्धस इति गायत्रं चामहीयवं च पवस्व मधुमत्तम इतीडानाँ संह्वार एकस्यां प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यमिति यौधाजयं तिसृषु पुनानः सोम धारयेति रौरवमेकस्याँ रथंतरं तिसृषु शिशुं जज्ञानँ हर्यतं मृजन्तीति वामदेव्यमन्त्यं बृहत्पृष्ठं वामदेव्यस्यर्त्तु स्वारँ सौपर्णँ श्रायन्तियं च कालेयं च स्वादिष्ठया मदिष्ठयेति गयत्रसँहिते परि प्र धन्वेन्द्रमच्छेति सफश्रुध्ये पुरोजिती वो अन्धस इति श्यावाश्वान्धीगवे सूर्यवतीषु कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम त्रिवृद्बहिष्पवमानं पञ्चदशानि त्रीण्याज्यानि त्रिवृन्मैत्रावरुणस्य सप्तदशो माध्यंदिनः पवमानो होतुश्च पृष्ठं पञ्चदशं मैत्रावरुणस्य पञ्चविँशं ब्राह्मणाच्छँसिनः सप्तदशमच्छावाकस्य सप्तदश आर्भव एकविँशोऽग्निष्टोमः ३-४

उपास्मै गायता नरः पवमानो अजीजनत् पवमानस्य ते कव इतीममू षु त्वमस्माकं मित्रं वयं हवामहे अहमिद्धि पितुष्परीयं वामस्य मन्मन उच्चा ते जातमन्धस इति गायत्रमेकस्याम् आमहीयवमेकस्याँ शाक्वरवर्णमेकस्यां पुनानः सोम धारयेति वैष्टंभमेकस्यां कालेयं एकस्यां यौधाजयमेकस्याम् औशनमन्त्यँ रथंतरं वामदेव्यं च श्रायन्तीयस्यर्त्तु सौभरं कालेयस्यर्त्तु वारवन्तीयँ स्वादिष्ठया मदिष्ठयेति गायत्रं च स्वाशिरां चार्कः पवस्वेन्द्रमच्छेति सफायास्ये पुरोजिती वो अन्धस इति श्यावाश्वान्धीगवे कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम ३-५

एषैवोत्तरस्य क्लृप्तिस्तस्यैकविँशमग्निष्टोमसामोभौ त्रिवृतौ ३-६-१

शाक्वरवर्णात्पूर्वँ स्वारँ सौपर्णमायास्यस्य लोके पौष्कलँ श्यावाश्वात्पूर्वमैडमायास्यं चतुर्विंशावुत्तरौ पवमानौ तृचक्लृप्तौ समानमितरं पूर्वेण सस्तोमँ ३-६-२

रथंतरदैर्घश्रवसे अन्तरैडमायास्यमेकस्याँ सँहितादुत्तरं जराबोधीयँ समानमितरं विश्वजितैकाहिकेनाग्निष्टोमेनाष्टादशावुत्तरौ पवमानावेकविँशँ होतुः पृष्ठमेकविंशो ऽग्निष्टोमस्त्रिवृदितरँ सर्वम् ३-६-३

पवमानस्य जिघ्नतः पुनानो अक्रमीदभि पवमानस्य ते कवे अग्निर्वृत्राणि जङ्घनन्मित्रँ हुवे पूतदक्षमु त्वा मन्दन्तु सोमास्ता हुवे ययोरिदमर्षा सोम द्युमत्तम इति गायत्रमेकस्यां वार्षाहरं एकस्याँ शाक्वरवर्णमेकस्यां पुनानः सोम धारयेति वषट्कारणिधनमेकस्याँ रौरवमेकस्यां यौधाजयमेकस्यामौशनमन्त्यँ रथँतरं च वामदेव्यं च बृहच्च कालेयं च यस्ते मदो वरेण्य इति गायत्र वार्षाहरे पवस्वेन्द्रमच्छेति सफौपगवे पुरोजिती वो अन्धस इति नानदान्धीगवे कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम त्रिवृतः पवमाना अग्निष्टोमसाम च तिसृभिराज्यपृष्ठानि ३-७

उपास्मै गायता नर इत्येकया बहिष्पवमानँ साद्यःक्राण्याज्यानीन्द्रायेन्दो मरुत्वत इति गायत्रं पुनानः सोम धारयेति उत्सेध औशनमन्त्यँ रथंतरं च वामदेव्यं च श्रायन्तीयस्यर्द्धि निषेधः स्वासु कालेयमया रुचा हरिण्या पुनान इति गायत्रपार्श्वं यज्ञायज्ञीयमग्निष्टोमसामैकत्रिक स्तोम एकयाथ तिसृभिः ३-८

ज्योतिष्टोमं बहिष्पवमानमग्ने विश्वेभिरग्निभिरा नो मित्रावरुणा त्वेता निषीदतेन्द्राग्नी आगतँ सुतमुच्चा ते जातमन्धस इति गायत्रं चामहीयवं च पवस्व मधुमत्तम इति कालेयं त्वे सोम प्रथमा वृक्तबर्हिष इति यौधाजयं पुनानः सोम धारयेति रौरवमौशनमन्त्यँ रथंतरं च वामदेव्यं चाधा हीन्द्र गिर्वण एन्दुमिन्द्राय सिञ्चतेति द्यौतानमारुते स्वादिष्ठया मदिष्ठयेति गायत्रसँहिते परि प्र धन्व नदँ वा ओदतीनामिति सफश्रुध्ये प्रयू ष्विति मरुताँ सँस्तोभः पुरोजिती वो अन्धस इति श्यावाश्वान्धीगवे कावमन्त्यं देवो वो द्रविणोदा इति यज्ञायज्ञीयमग्निष्टोमसाम त्रिवृद्बहिष्पवमानं पञ्चदशानि त्रीण्याज्यानि षोडशमच्छावाकस्य षोडशो माध्यंदिनः पवमानः सप्तदशानि त्रीणि पृष्ठानि षोडशमच्छावाकस्य षोडश आर्भव एकविँशोऽग्निष्टोमः ३-९

एते असृग्रमिन्दवो यवंयवं नो अन्धसेति पुरस्तात्पर्यासस्य तृचचतुर्ऋचे आयुष उक्थानि षोडशाः पवमाना अच्छावाकसामानि चैकविँशोऽग्निष्टोमो द्वे चोक्थे समानमितरं पूर्वेण सस्तोमम् ३-१०-१

इन्द्रायेन्दो मरुत्वत इति गायत्रं चामहीयवं च पवस्व मधुमत्तम इति कालेयं त्वे सोम प्रथमा वृक्तबर्हिष इति दैर्घश्रवसं पुनानः सोम धारयेति रौरव यौधाजये श्रुध्यस्य लोके मरुाँ सँस्तोभो मरुताँ सँस्तोभस्य श्यावाश्वं पुरोजिती वो अन्धस इत्यान्धीगवं त्रिवृतावुत्तरौ पवमानौ समानमितरं प्रथमेन व्रात्यस्तोमेन सस्तोमम् ३-१०-२

अग्नियवती प्रतिपत् पूर्वस्य प्रातःसवनम् उच्चा ते जातमन्धस इति गयत्रं चामहीयवं च पवस्व मधुमत्तम इति कालेयं त्वे सोम प्रथमा वृक्तबर्हिष इति दैर्घश्रवसं पुनानः सोम धारयेति रथंतरँ रौरवयौधाजये वृषा शोण इति पार्थमन्त्यं बृहच्च वामदेव्यं चाधा हीन्द्र गीर्वण एन्दुमिन्द्राय शिञ्चतेति द्यौतानमारुते स्वादिष्ठया मदिष्ठयेति गायत्रसँहिते जराबोधीयं च स्वाशिरां चार्कः परि प्र धन्व नदं व ओदतीनामिति सफश्रुध्ये पर्यू ष्विति मरुताँ सँस्तोभः पुरोजिती वो अन्धस इति श्यावाश्वान्धीगवे आथर्वणं च बृहच्चाग्नेयं कावमन्त्यं देवो वो द्रविणोदा इति यज्ञायज्ञीयमग्निष्टोमसाम द्वे त्रिवृती स्तोत्रे द्वे पञ्चदशसप्तदशे द्वे एकविँशचतुर्विंशे द्वे चतुश्चत्वारिँशाष्टाचत्वारिँशे द्वे त्रिणवत्रयस्त्रिँशे द्वे द्वात्रिँशे ३-११

अग्न आयूँषि पवसे अग्ने पावक रोचिषाग्निर्मुर्धा दिवः ककुदग्न आ याहि वीतये कस्ते जामिर्जनानामीडेन्यो नमस्यो ऽग्निर्वृत्राणि जङ्घनदुत्ते बृहन्तो अर्चय इति गायत्रमेकस्यामामहीयवमेकस्यां जराबोधीयमेकस्यां पाहि नो अग्न एकयेति यौधाजयं तिसृष्विनो राजन्नरतिः समिद्ध इत्यौशनमन्त्यमेना वो अग्निं नमसा कया ते अग्ने अङ्गिर इति रथंतरं च वामदेव्यं चाग्न आ याह्यग्निभिरच्छा नः शीरशोचिषमिति नौधसकालेये अदाभ्यः पुर-एतेति गायत्रसँहिते भद्रो नो अग्निराहुतो ऽग्ने वाजस्य गोमत इति सफ पौष्कले विशोविशो वो अतिथिमिति श्यावाश्वान्धीगवे समिद्धमग्निँ समिधा गिरा गृण इति यज्ञायज्ञीयमन्त्यमुप त्वा जामयो गिर इति वायव्यासु वारवन्तीयमग्निष्टोमसाम ३-१२

एषैवोत्तरस्य क्लृप्तिस्तस्य रेवतीषु वारवन्तीयमग्निष्टोमसामो उभौ त्रिवृताव् ३-१३-१

उद्धरति जराबोधीयं यौधाजयात्पूर्वँ रौरवं पौष्कलस्य लोके श्रुध्यँ श्यावाश्वस्य यज्ञायज्ञीयं यज्ञायज्ञीयस्य कावँ समानमितरं पूर्वेण ज्योतिष्टोम स्तोमो ३-१३-२

अवा नो अग्न ऊतिभिरग्निँ हिन्वन्तु नो धिय इति पुरस्तात्पर्यासस्य तृचपञ्चर्चे पाहि नो अग्न एकयेति रौरवं तिसृषु दैर्घश्रवसमेकस्याँ समन्तं विष्टारपङ्क्तौ यौध्जयं तिसृषु १९ समानमितरं पूर्वेण सर्वः सप्तदशः ३-१३-३

पवस्वेन्दो वृषा सुत एते असृग्रजिन्दवः पवमानस्य ते कवे व्रात्यान्याज्यान्युच्चा ते जातमन्धस इति गायत्रमेकस्यामामहीयवमेकस्यां जराबोधीयमेकस्यां पुनानः सोम धारयेति यौधाजयं तिसृषु स्वासु नौधसस्यद्भवभीवर्तो ब्रह्मसाम समानमितरं ज्योतिष्टोमेन ३-१३-४

एष एवोत्तरस्य मध्यंदिनो ज्योतिष्टोममितरँ सर्वँ ३-१३-५

शाक्वरवर्णस्य लोके जरबोधीयं वषट्कारणिधनस्य सप्तहं बृहतो वषट्कारणिधनँ समानमितरच्छ्येनेन ३-१३-६

प्र सोमास अधन्विषुः क्प्र स्वानासो रथा इवा सृग्रमिन्दवः पथो पप्रयन्तो अध्वरं प्र वो मित्राय गायत प्र व इन्द्राय मादनं प्र वामर्चन्त्युक्थिनः प्र सोमासो विपश्चित इति गायत्रं प्र सोम देववीतय इति गौङ्गवं प्र तु द्रवेत्यौशनमन्त्यं वामदेव्यं च मैधातिथं च हारायणं च कौल्मलबर्हिषं च प्र सोमासो मदच्युत इति गायत्रं चाशु भार्गवम् अभि द्युम्नं बृहद्यशः प्र धन्व सोम जागृविरिति सफ सत्रासाहीये प्र सुन्वानायान्धस इति श्यावाश्वौदले प्रो अयासीदिति कावमन्त्यं प्र दैवोदासो अग्निरिति यज्ञायज्ञीयमग्निष्टोमसाम दैर्घश्रवसँ स्वासु यदि जीवेत् सर्वः स्वारः सर्वे त्रिवृतः शान्तिर्वामदेव्यँ शान्तिर्वामदेव्यम् ३-१४

अग्न आयूँषि पवस उपास्मै गायता नर उपो षु जातमप्तुरं पवमानस्य ते वयं पवमानस्य ते कवे शग्ध्यु षु शचीपत इत्यभीवर्तो ब्रह्मसाम समानमितरं बृहस्पतिसवेन सस्तोमम् ४-१-१

इमं मे वरुण श्रुधी हवमुपास्मै गायता नर उपो षु जातमप्तुरं पवमानस्य ते वयं पवमानस्य ते कवे सँहितस्य लोके हाविष्कृतं जनुषैकर्चयोः सफपौष्कले श्यावाश्वस्यौदलँ समानमितरं ज्योतिष्टोमेन त्रिवृद्बहिष्पवमानं पञ्चदशमितरँ सर्वं ४-१-२

कया त्वं न ऊत्या पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुतो वृषा सोम द्युमाँ असि वृषा ह्यसि भानुना अग्निं दूतं वृणीमह इत्याज्यान्यस्य प्रत्नामनु द्युतमिति गायत्रं च हाविष्मतं च परीतो षिञ्चता सुतमिति समन्तं च दैर्घश्रवसं चायास्ये अयँ सोम इति पार्थमन्त्यं बृहच्च वामदेव्यं च त्रैशोकं च वैखानसं च यस्ते मदो वरेण्य इति गायत्रसँहिते पवस्वेन्द्रदमच्छेति सत्रासाहीय श्रुध्ये अयं पूषा रयिर्भग इति श्यावाश्व क्रौञ्चे धर्ता दिव इति दीर्घतमसोऽर्कोऽन्त्यो यज्ञायज्ञीयमग्निष्टोमसाम साकमश्वँ सौभरमाष्टादँष्ट्रं त्रिवृद्बहिष्पवमानं पञ्चदशँ होतुराज्यँ सप्तदशमितरँ सर्वम् ४-२

उप त्वा जामयो गिर उपास्मै गायता नर उपो षु जातमप्तुरं पवमानस्य ते वयं पवमानस्य ते कवे अग्न आ याहि वीतय इत्याज्यानि प्र सोमासो विपश्चित इति गायत्रमाश्वमाशु भार्गवं प्र सोम देववीतय इति पज्रं गौङ्गवं यौधाजयम् औशनमन्त्यँ रथंतरं च वामदेव्यं चेन्द्रमिद्देवतातय इति यौक्तस्रुचँ स्वासु कालेयँ स्वादिष्ठया मदिष्ठयेति गायत्रं च स्वाशिरां चार्कः पवस्वेन्द्रमच्छेति सफपौष्कले । साध्रे प्र सुन्वानायान्धस इत्यौदलसाध्रे औदलगौतमे वा कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम त्रिवृद्बहिष्पवमानं पञ्चदशँ होतुराज्यँ सप्तदशं मैत्रावरुणस्यैकविँशमितरं सर्वम् ४-३

इन्द्रायेन्दो मरुत्वते पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुतो वृषा सोम द्युमाँ असि वृषा ह्यसि भानुना ग्निं दूतं वृणीमह इत्याज्यानि वृषा पवस्व धारयेति गायत्रं च यौक्ताश्वं चा जिगं च स्वारं च सौपर्णं पुनानः सोम धारयेति समन्तं च दैर्घश्रवसं चा यास्ये वृषा शोण इति पार्थमन्त्यं बृहच्च वामदेव्यं च श्यैतं च माधुच्छन्दसं च यस्ते मदो वरेण्य इति गायत्रम् अग्नेरर्कः सुरूपं त्वं ह्यङ्ग पवस्व देववीतय इति शङ्कुसुज्ञाने अयं पूषा रयिर्भग इति आसितं क्रौञ्चं भर्गो

वृषा मतीनां पवत इति याममन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम साकमश्वँ सौभरम् उद्वँशीयं त्रिवृद्बहिष्क्पवमानं पञ्चदशँ होतुराज्यँ सप्तदशं मैत्रावरुणस्यैकविँशं ब्राह्मणाच्छँसिनस्त्रिणवमितरँ सर्वम् ४-४

विश्वकर्मन्हविषा वावृधानो दविद्युतत्या रुचै ते असृग्रमिन्दवो राजा मेधाभिरीयत इषे पवस्व धारया होता देवो अमर्त्यः पुरूरुणा चिद्धयस्ति तमिन्द्रं वाजयामसीयं वामस्य मन्मन उच्चा ते जातमन्धस इति गायत्रं चामहीयवं च जराबोधीयं चर्षभश्च पवमानो गौषूक्तमभिसोमास आयव इति पौरुमद्गं च गौतमं चान्तरिक्षं च मैधातिथं चोत्सेधस्तिस्त्रो वाच इत्यङ्गिरसाँ संक्रोशोऽन्त्यो रथंतरं च वामदेव्यं च श्रायन्तीयं च रौरवं च परि स्वनो गिरीस्था इति गायत्रँ सँहितं वारवन्तीयँ स सुन्वे यो वसूनाम् प्राण शिशुर्महीनामिति दीर्घ श्रुध्ये पुरोजिती वो अन्धस इति श्यावाश्वा न्धीगवे निषेधः परि प्र धन्वेति वाजदावर्यो या रुचेति नित्यवत्सा धर्ता दिव इति दीर्घतमसोऽर्कोऽन्त्यो यज्ञायज्ञीयमग्नि-ष्टोमसाम प्रमँहिष्ठीयँ हारिवर्णं नार्मेधं गौरीवितँ षोडशिसाम रात्रिः संधिस्त्रिवृद्बहिष्पवमानं पञ्चदशँ होतुराज्यँ सप्तदशं मैत्रावरुणस्यैकविँशं ब्राह्मणाच्छँसिनस्त्रिणवमच्छावाकस्य त्रयस्त्रिँशमितरँ साग्निष्टोमसामैक-विँशान्युक्थानि सषोडशिकानि पञ्चदशि रात्रिस्त्रिवृत्संधिः ४-५-१

क्लृप्तोऽग्निष्टोमः शुनासीर्यस्य लोके ४-५-२

पवस्वेन्दो वृषा सुत एते असृग्रमिन्दव उत नो गोषणिं धियं शशमानस्य वा नर उप नः सूनवो गिर उत्ते शुष्मास ईरते पवमानस्य ते कवे होता देवो अमर्त्यः प्र वां महि द्यवी अयमु ते समतसि गाव उप वदावते पवमानस्य जिघ्नत इति गायत्रं चामहीयवं च परीतो षिञ्चता सुतमिति समन्तं च दैर्घश्रवसं च बार्हदुक्थं च यौधाजयं च साकमुक्ष इति पार्थमन्त्यं मा भेम म श्रमष्मेति बृहत्स्वासु वामदेव्यमिमा उ त्वा पुरूवसो यस्यायं विश्व आर्य इति श्यैतं च कालेयं च पवमानो अजीजनदिति गायत्र सँहिते आ सोता परि षिञ्चत गोमन्न इन्द्रो अश्ववदिति सफ श्रुध्ये अभि नो वाजसातममिति श्यावाश्वा न्धीगवे अञ्जत इति कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम ४-६

द्वितीयस्य स्वरसाम्न स्राज्यबहिष्पवमानं बार्हदुक्थस्य लोक स्राष्टादँष्ट्रं मौद्मस्य हाविष्मतँ श्रुध्यस्य सुज्ञानम् उद्धरत्युक्थानि समानमितरं गवैकाहिकेन ४-७-१

एते स्रसृग्रमिन्दव उत्ते शुष्मास ईरत इति पुरस्तत्पर्यासस्य तृचपञ्चर्चे स्वासु श्यैतँ समानमितरं प्रथमेन साहस्रेण ४-७-२

पवमानस्य विश्वविद्दविद्युतत्या रुचै ते स्रसृग्रमिन्दवस्तं त्वा नृम्णानि बिभ्रतं पवमानस्य ते कवे विश्वेभिरग्ने स्रग्निभिर्मित्रं वयँ हवामह इन्द्रं वो विश्वतस्परि ता हुवे ययोरिदमभि त्वा शूर नोनुम इति करावरथंतरं पृष्ठम् स्रा नो विश्वासु हव्यमिति सदोविशीयं ब्रह्मसाम जनुषैकर्चयोः सफ पौष्कले परि त्यँ हर्यतँ हरिमित्यनुष्टुप्पवित्रं त इति कावमन्त्यमुद्धरत्युक्थानि समानमितरमायुषैकाहिकेन ४-७-३

एते स्रसृग्रमिन्दवस्तं त्वा नृम्णानि बिभ्रतमिति पुरस्तात्पर्यासस्य तृचपञ्चर्चे श्रायन्तीयं ब्रह्मसाम संहितस्य लोके मौद्मं पौष्कलस्य श्रुध्यँ श्यावाश्वस्य यज्ञायज्ञीयं यज्ञायज्ञीयस्यर्त्तु विशोविशीयमग्निष्टोमसाम समानमितरं स्रायुषैकाहिकेन ४-७-४

पूर्वस्य बहिष्पवमानं व्रात्यानि त्रीरयाज्यानि वैश्वजितमुत्तमं बार्हदुक्थस्य लोके देवस्थानँ रथंतरं पृष्ठमभीवर्तो ब्रह्मसाम मौद्मस्य लोके स्वाशिरामर्कः श्यावाश्वस्य यज्ञायज्ञीयं त्वं नश्चित्र ऊत्येति वारवन्तीयमग्निष्टोमसाम समानमितरं गवैकाहिकेन गौरीवितँ षोडशिसाम विष्णोः शिपिविष्टवतिषु बृहत् सर्वे सप्तदशाः क्लृप्तो ज्योतिष्टोमः प्रत्यवरोहणीयः ४-७-५

क्लृप्तोऽभ्यारोहणीयः ४-७-६

वायो शुक्रो स्रयामि त इति तृचः षट् संभार्या वैश्वजित्यः पवस्व वाचो स्रग्रियो दविद्युतत्या रुचैतमु त्यं दश द्मिपः पवस्वेन्दो वृषा सुत उत्ते शुष्मास ईरते पवमानस्य ते कवेधा द्मपा परिष्कृतो वैश्वजितान्याज्यान्युच्चा ते जातमन्धस

इति गायत्रं चा महीयवं च जराबोधीयं च स्वारं च सैन्धुक्षितं परीतो षिञ्चता सुतमिति समन्तं च रथंतरं च दैर्घश्रवसं च देवस्थानं च वरुणसाम च रौरव यौधाजये वृषा शोण इति पार्थमन्त्यं बृहच्च वमदेव्यं च श्यैतं च कालेयं च यस्ते मदो वरेण्य इति गायत्र मौक्षे काक्षीवतं च स्वाशिरां चार्कः पवस्वेन्दरमच्छेति सफ दैवोदासे पुरोजिती वो अन्धस इति वाध्र्यश्वं च वैतहव्यं च सोमसाम च त्रासदस्यवं चा न्धीगवं च कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसामा ग्ने त्वं नो अन्तम इति सत्रासाहीयँ सौभरम् उद्वँशीयं द्वात्रिँसाः पवमानाः पञ्चदशान्याज्यानि सप्तदशानि पृष्ठान्येकविंशोऽग्निष्टोमः सोक्थः ४-८

राजा मेधाभिरीयते तं त्वा नृम्णानि बिभ्रतमिति पुरस्तात्पर्यासस्य तृचपञ्चर्चे मैधातिथस्य लोके सदोविशीयँ रौरवस्य मैधातिथँ श्रायन्तीयं ब्रह्मसाम पौष्कलस्य लोके श्रुध्यँ श्यावाश्वस्य यज्ञायज्ञीयं वारवन्तीयमग्निष्टोमसाम स्वासूद्धरत्युक्थानि समानमितरमायुषैकाहिकेन सर्वः सप्तदशः ४-९-१

पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुतो दविद्युतत्या रुचै ते असृग्रमिन्दवो वृषा सोम द्युमाँ असि वृषा ह्यसि भानुना पवमानस्य ते कवे ऽग्निं दूतं वृणीमह इत्याज्यानि परीतो षिञ्चता सुतमिति समन्तं च यशश्चाभीशवं च यौधाजयं च वृषा शोण इति पार्थमन्त्यं बृहत्पृष्ठं त्वमिन्द्र प्रतूर्तिष्वित्यत्राभीवर्तो ब्रह्मसाम समानमितरमायुषातिरात्रेणै कविँशं प्रातःसवनँ सप्तदशं माध्यंदिनँ सवनं पञ्चदशं तृतीयसवनँ सोक्थँ सरात्रिकं त्रिवृत्संधिर् ४-९-२

ज्योतिष्टोममाज्यबहिष्पवमानँ स्तोमाश्चा थ यदेव द्विदिवसस्य पूर्वमहस्तदेतत् ४-९-३

पवस्व वाचो अग्रिय एष देवो अमर्त्य एष धिया यात्यण्व्या ते दक्षं मयोभुवमग्निं दूतं वृणीमह इत्याज्यान्यस्य प्रत्नामनु द्युतमिति गायत्रं च हाविष्मतं च जराबोधीयं च र्षभश्च पवमानः परीतो षिञ्चता सुतमिति समन्तं दैर्घश्रवसमुत्सेधो ऽयँ सोम इति पार्थमन्त्यं बृहच्च वामदेव्यं च त्रैशोकं च वैखानसं च परि स्वानो गिरिष्ठा इति गायत्र सँहिते पवस्वेन्द्रमच्छेति

सत्रासाहीय विशोविशीये अयं पूषा रयिर्भग इति निषेधः श्यावाश्वं क्रौञ्चं धर्ता दिव इति दीर्ग्रहतमसोऽर्कोऽन्त्यो यज्ञायज्ञीयमग्निष्टोमसाम ज्योतिष्टोमोऽतिरात्रः षोडशिमाँश्चतुर्विँशाः पवमानाः पञ्चदशानित्रीरयाज्यानि सप्तदशमच्छावाकस्यैकविंशानि त्रीणि पृष्ठानि त्रिणवमच्छावाकस्य त्रयस्त्रिँशोऽग्निष्टोम एकविँशान्युक्थानि सषोडशिकानि पञ्चदशी रात्रिस्त्रिवृत्संधिः ४-१०-१

क्लृप्तो ज्योतिष्टोमः क्षत्रस्य धृतिः ४-१०-२

राजा मेधाभिरीयत उत्ते शुष्मास ईरत इति पुरस्तात्पर्यासस्य तृचपञ्चर्चे ज्योतिष्टोमी गायत्री वृषा शोण इति पार्थमन्त्यं यो राजा चर्षणीनामित्यभीवर्तो ब्रह्मसाम समानमितरं प्रथमेन साहस्रेण सप्तदशाः पवमानास्त्रिवृन्त्याज्यानि पञ्चदशानि पृष्ठान्येकविंशोऽग्निष्टोमो ५-१-१

यवंयवं नो अन्धसेत्यनुरूप आमहीयवादुत्तरमाभीकमान्धीगवादर्कपुष्पँ समानमितरं ज्योतिष्टोमेन सर्वो दशदश्य् ५-१-२

एष शुष्म्यसिष्यददिति पुरस्तात्पर्यासस्यैकर्च आमहीयवादुत्तरम् पवस्व मधुमत्तम इति च्यावनं नौधसस्यर्द्धु जनित्रं परि प्र धन्वेति सफं पर्यू ष्विति श्यावाश्वं पुरोजिती वो अन्धस इत्यान्धीगवं च जनित्रं च समानमितरं ज्योतिष्टोमेन सस्तोममेकैका स्तोत्रियोपजायते ५-१-३

रौरवयौधाजये अन्तरा मैधातिथं नौधसस्यर्द्धु शुद्धाशुद्धीयं ब्रह्मसाम यत् पदनिधनँ सँहितस्य लोके गौषूक्तं पौष्कलस्याश्वसूक्तं प्रमाँहिष्ठीयँ हारिवर्णँ शुद्धाशुद्धीयँ स्वासु यदैडँ समानमितरं ज्योतिष्टोमेन द्वादशं माध्यंदिनँ सवनं त्रिवृती अभितो ५-२-१

अयं पूषा रयिर्भग इति तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति पुनस्तोमस्याज्यमध्यंदिनं तीव्रसुतः पृष्ठानि ज्योतिष्टोम आर्भव आन्धीगवादुत्तरं यज्ञायज्ञीयं यज्ञायज्ञीयस्यर्द्धु वारवन्तीयेन षड्भिः साकमश्वस्य षड्भिर्हारिवर्णस्य षड्भिस्तैरश्चयस्य षड्भिरनुब्राह्मणँ स्तोमास् ५-२-२

तरत्स मन्दी धावतीति चतसृभिर्बहिष्पवमानमिन्द्रायेन्दो मरुत्वत इति गायत्रं चामहीयवं च यज्ञायज्ञीयस्यर्त्तु वारवन्तीयमग्निष्टोमसाम साकमश्वँ हारिवर्णं तैरश्चयं गौरीवितँ षोडशिसाम समानमितरं पूर्वेणानुब्राह्मणँ स्तोमाः ५-२-३

उपो षु जातमप्तुरमित्यनुरूपो यज्ञ इन्द्रमवर्धयदिति ब्रह्मण आज्यं पिबा सुतस्य रसिन इत्युत्सेधो ब्रह्मसाम जनुषैकर्चयोः सफं च वलभिच्च श्यावाश्वस्य लोक औदलमञ्जत इति कावमन्त्यमुद्धरत्युक्थानि समानमितरमायुषैकाहिकेन सप्तिसप्तदशौ स्तोमौ विपर्यासं ५-३-१

प्रतीचीनस्तोमस्य बहिष्पवमानं यज्ञ इन्द्रमवर्धयदिति ब्रह्मण आज्यं पिबा सुतस्य रसिन इति निषेधो ब्रह्मसाम मौत्तस्य लोके वलभित्सफस्य सत्रासाहीयमयं पूषा रयिर्भग इति श्यावाश्वक्रौञ्चे अग्रेगो राजाप्यस्तविष्यत इति कावमन्त्यं उद्धरत्युक्थानि समानमितरं गवैकाहिकेनै कविँशं बहिष्पवमानं तिसृभिर्होतुराज्यँ सप्तिसप्तदशमितरँ सर्वं ५-३-२

वलभिदो बहिष्पवमानमुभौ पर्यासावभिजितो गायत्री पुनानः सोम धारयेति बृहति ज्योतिष्टोमे अन्त्ये त्वमिन्द्र यशा असीति यशो ब्रह्मसाम सँहितादुत्तरं जराबोधीयमान्धीगवाद्धर्गः समानमितरं प्रथमेन साहस्रेण चतुर्विँशं बहिष्पवमानं त्रिवृत्पञ्चदशान्याज्यानि चतुर्विँशो माध्यंदिनः पवमानः सप्तदशैकविँशानि पृष्ठानि त्रिणव आर्भव एकविँशोऽग्निष्टोमः ५-३-३

साहस्त्रं बहिष्पवमानं यथा प्रथमस्या महीयवादुत्तरमैडँ सौपर्णं जराबोधीयात्स्वाशिरामर्कं आनुष्टुभेभ्य उत्तरम्परि प्र धन्वेति द्विपदासु वारवन्तीयँ सूर्यवतीषु कावमन्त्यँ समानमितरं पूर्वेण त्रिवृद्बहिष्पवमानं पञ्चदशँ होतुराज्यँ सप्तदशे द्वे एकविँशमच्छाकावस्य त्रिणवो माध्यंदिनः पवमानश्छन्दोमाः पृष्ठानि त्रयस्त्रिँश आर्भव एकविँशोऽग्निष्टोम ५-४-१

उच्चा ते जातमन्धस इति गायत्रं चामहीयवं च जराबोधीयं च स्वारं च सौपर्णमग्नेश्च व्रतं यौधाजयात्पूर्वं रौरवं यशसो लोके श्यैतँ स्वादिष्ठया

मदिष्ठयेति गायत्रं च स्वाशिरां चार्कः समानमितरं पूर्वेण ज्योतिष्टोममत ऊर्ध्वँ षडूर्ध्वा षडर्वाञ्चो ५-४-२

ज्योतिष्टोममाज्यबहिष्पवमानम् उद्धरति जराबोधीयँ रथंतररौरवे वाजपेयस्य पृष्ठानि पुरोजिती वो अन्धस इति औदलमेकस्यामान्धीगवमेकस्याँ श्यावाश्वमेकश्यां बृहत्तिसृषु समानमितरं पूर्वेण त्रिवृद्बहिष्पवमानं पञ्चदशानि त्रीण्याज्यानि त्रिवृन्मैत्रावरुणस्य चतुर्विँशो माध्यंदिनः पवमानः सप्तदशानि त्रीणि पृष्ठानि पञ्चदशं मैत्रावरुणस्य सप्तदश आर्भव एकविँशोऽग्निष्टोमः ५-४-३

पुनानः सोम धारयेति रौरवं तिसृषु सदोविशीयमेकस्याँ समन्तं विष्टारपङ्क्तौ यौधाजयं तिसृष्वभीवर्तो ब्रह्मसाम पुरोजिती वो अन्धस इति गौरीवितमेकस्यामान्धीगवमेकस्याँ श्यावाश्वमेकस्यां बृहत्तिसृषु सप्तदशो माध्यंदिनः पवमानः समानमितरं ज्योतिष्टोमेन सस्तोमम् ५-५-१

उपास्मै गायता नर इति तृचः षट्संभार्या वैश्वजित्यः पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुतो दविद्युतत्या रुचै ते असृग्रमिन्दवो वृषा सोम द्युमाँ असि वृषा ह्यसि भानुनै तमु त्यं दश क्षिपः पवमानस्य ते वयं पवमानस्य ते कवे पुनानः सोम धारयेति बृहती समानमितरमभिषेचनीयेन सर्वः षट्त्रिँशो ५-५-२

या ज्योतिष्टोमस्य सा मरुत्स्तोमस्य ५-५-३

या बृहस्पतिसवस्य सेन्द्राग्न्योः कुलायस्य नुब्राह्मणँ स्तोमाः ५-५-४

इन्द्रायेन्दो मरुत्वते पवस्वेन्दो वृषा सुतो वृषा सोम द्युमाँ असि वृषा ह्यसि भानुना पवमानस्य ते कव ईडेन्यो नमस्यो यदुद्य सूर उदित इन्द्रमिद्गाथिनो बृहद् इन्द्रे अग्ना नमो बृहदुच्चा ते जातमन्धस इति गायत्रं चामहीयवं च तवाहँ सोम रारणेति समन्तं च यौधाजयं च वृषा शोण इति पार्थमन्त्यं बृहच्च रेवतीषु च वामदेव्यँ श्यैतं च कालेयं च स्वादिष्ठया मदिष्ठयेति गायत्र मौक्ष्णे

पवस्वेन्द्रमच्छेति सफ श्रुध्ये परि त्यँ हर्यतँ हरिमिति श्यावाश्वान्धीगवे सूर्यवतीषु कावमन्त्यं प्र दैवोदासो अग्निरिति यज्ञायज्ञीयमग्निष्टोमसाम स्वासु सत्रासाहीयं तव त्यद् इन्द्रियं बृहदिति सौभरं स्वासूर्द्वँशीयँ सर्वः पञ्चदशः ५-६

पवस्व वाचो अग्रिय उपास्मै गायता नरः पवमानस्य ते कवे ग्निं दूतं वृणीमह इत्युभयान्याज्यानि पुननः सोम धारयेति रौरवमेकस्यां यौधाजयमेकस्यां दैर्घश्रवसमेकस्याँ रथंतरं तिसृषु बृहत्पृष्ठँ श्यैतस्यद्वर्वभीवर्तो ब्रह्मसाम समानमितरं ज्योतिष्टोमेन त्रिवृत्पञ्चदशौ स्तोमौ विपर्यासँ ५-७-१

स्वासु श्यैतँ सँहितादुत्तरं जराबोधीयँ श्रुध्यस्य लोके विशोविशी-यमान्धीगवादुत्तरँ सोमसामा थर्वणं वासमानमितरं प्रथमेन साहस्रेण द्वे त्रिवृती स्तोत्रे द्वे द्वादशे द्वे पञ्चदशसप्तदशे द्वे एकविँशनरदशे द्वे चतुर्विँशे द्वे त्रिणवे ५-७-२

पवस्व वाचो अग्रिय उपास्मै गायता नरः पवमानस्य ते कवे नमस्ते अग्न ओजसे मित्रं वयँ हवामहे समस्य मन्यवे विशस्ता हुवे ययोरिदम्प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यमिति द्वयोः सतोबृहत्योर्गायत्रं तिसृष्वामहीयवमेकस्यामैडँ सौपर्णमेकस्याँ सत्रासाहीयमेकस्यां यैका परिशिष्यते तस्याँ सदोविशीयं पुनानः सोम धारयेति रौरवमेकस्यां यौधाजयमेकस्याँ समन्तमेकस्याँ रथंतरं तिसृष्वध यदिमे पवमान रोदसी इत्युत्सेध एकस्यामयँ सोम इति पार्थमन्त्यं बृहच्च वामदेव्यं च तदिदास भुवनेषु ज्येष्ठमिति श्यैतँ स्वासु कालेयँ स्वादिष्ठया मदिष्ठयेति गायत्रं तिसृषु संहितमेकस्याँ सुरूपमेकस्याँ स्वाशिरां चार्क एकस्यां पवस्वेन्द्रमच्छेति सफविशोविशीये पुरोजिती वो अन्धस इति गौरीवितं एकस्यां निषेध एकस्याँ श्यावाश्वामेकस्यामान्धीगवं तिसृषु मधुश्चुन्निधनं तिसृषु सुमन्मा वस्वी रन्ती सुनरीति वारवन्तीयं तिसृषु कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम द्वे त्रिवृती स्तोत्रे द्वे द्वादशे द्वे पञ्चदशसप्तदशे द्वे नवदशचतुर्विँशे द्वे चतुर्विँशैकविँशे द्वे त्रिणवे ५-८

श्येनमाज्यबहिष्पवमानमर्षा सोम द्युमत्तम इति गायत्र वार्षाहरे पुनानः सोम

धारयेति वैयश्वमेकस्यां वषट्कारणिधनमेकस्याँ रौरवमेकस्यां यौधाजयं तिसृष्वौशनमन्त्यँ रथंतरं च वामदेव्यं च सप्तहं च कालेयं च यस्ते मदो वरेरय इति गायत्रं वार्षाहरँ सत्रासाहीयं पवस्वेन्द्रमच्छेति काशीतौ पगवे पुरोजिती वो अन्धस इति नानदा न्धीगवे सामत्रयाणां यत्प्रथमं कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम द्वे त्रिवृती स्तोत्रे द्वे द्वादशे द्वे पञ्चदशे द्वे एकविँशे द्वे चतुर्विँशे द्वे त्रिणवे ५-९-१

पवस्वेन्दो वृषा सुतो ऽपघ्नन्पवते मृध इति पुरस्तात्पर्यासस्य तृचे उद्धरति सत्रासाहीयं पुरोजिती वो अन्धस इति नानदमेकस्याँ तस्यामेवान्धीगवँ श्यावाश्वमेकस्याँ सामैकस्यां त्रयाणां यद्द्वितीयं प्रमाँहिष्ठीयमौपगवमुद्वँशीयं महानाम्नयः षोडशिसाम समानमितरं पूर्वेण सर्वः पञ्चदशः क्लृप्तो ज्योतिष्टोमः शान्त्यर्थः शान्त्यर्थः ५-९-२

अहीनः अथ विंशप्रभृतिभिरध्यायैर्ब्राह्मणैस्त्रिभिर्ये ऽहीना विहितास्तेषां क्लृप्तिः षष्ठादिषु त्रिषु पौर्णमासीदीक्षामासपवर्गा अह्ना इत्यादि पटलद्वयं तेषां सूत्रम् ६ ७ ८

क्लृप्तो ज्योतिष्टोमोऽतिरात्रोऽषोडशिको यदि वा षोडशिमान्ब्राह्मणे षष्ठादिभिश्चतुर्भिरध्यायैरतिरात्रसंस्थो ज्योतिष्टोमोऽषोडशिकः क्लृप्तः यदि वा षोडशिमानिति तु ब्राह्मणान्तरानुसारेणोक्तं अस्य चातिरात्रस्य प्रयोग आदवेवास्माभिर्दर्शितः वक्ष्यमाणानां रात्रेर्विशेषमाह अहीनिक्याँ रात्रौ पण्यंपण्यमित्सोतार इति श्रौतकक्षं दैवोदासं होतृषाम कौत्सस्य लोक आष्टादँष्ट्रमा त्वा विशन्त्विन्दव इत्येतासु समानमितरँ सात्रिक्या ६-१-१

सर्वस्तोमस्योपवती प्रतिपत् स्वासु श्यैतं परिस्वानार्भवीया सँहितादुत्तरं जराबोधीयमान्धीगवादाथर्वणँ समानमितरं प्रथमेन साहस्रेण तस्य ज्योतिष्टोमोऽतिरात्रः षोडशिमान् ६-१-२

अप्तोर्याम्नस्तृतीयस्य साहस्रस्याज्यबहिष्पवमानं जराबोधीयस्य लोके सुरूपमुद्धरत्याथर्वणं परि प्र धन्वेति स्वर्वन्निधनँ सौहविषँ समानमितरं पूर्वेण

वैश्वजितानि पृष्ठानि पृष्ठानां गर्भा अनुब्राह्मणमतिरिक्तस्तोत्राणि ६-१-३

नवसप्तदशस्या महीयवादुत्तरं पवस्व मधुमत्तम इति साकमश्वमभि सोमस आयव इति जनित्रँ रौरव यौधाजये नौधसस्यर्च्चु जनित्रं परि प्र धन्वेति सफँ समानमितरं ज्योतिष्टोमेनातिरात्रेणाषोडशिकेन ६-१-४

या ज्योतिष्टोमस्य सा विषुवतस्तस्य सप्तदशान्युक्थान्यषोडशिकोऽतिरात्रः ६-१-५

क्लृप्ते गो आयुषी ६-१-६

क्लृप्तौ विश्वजिदभिजितौ ६-१-७

या बृहस्पतिसवस्य सैकस्तोमानां प्रथमस्य तस्यैव ज्योतिष्टोमोऽतिरात्रः षोडशिमान् ६-१-८

गोराज्यबहिष्पवमानमिन्द्रस्तोमस्य मध्यंदिनः पुनानः सोम धारयेति बृहती स्वासु श्यैतँ समानमितरं प्रथमेन साहस्रेण तस्य ज्योतिष्टोमोऽतिरात्रः षोडशिमाँस् ६-२-१

तीव्रसुत आज्यबहिष्पवमानं मध्यंदिनश्च समानमितरं प्रथमेनैकस्तोमेन ६-२-२

प्रतीचीनस्तोमस्य बहिष्पवमानमभिजितो गायत्री ज्योतिष उत्तरस्य बृहती समानमितरं द्वितीयेनैकस्तोमेन षोडशाः षोडशिनोऽनुब्राह्मणं वा ६-२-३

ये व्युष्टिद्विरात्रस्याहनी ते आङ्गिरसद्विरात्रस्यो त्तरादह्न ऋषभजराबोधीये उद्धरति समन्तदैर्घश्रवसे अन्तराथर्वणँ सँहितादुत्तरं जराबोधीयं विशोविशीयस्य लोके श्रुध्यं ६-२-४

याङ्गिरसद्विरात्रस्य पूर्वा सा चैत्ररथस्य तस्यायुष उक्थानि इति पूवमहः पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुत आ ते दक्षं मयोभुवँ श्रुध्यस्य लोके जराबोधियं नार्मेधाद्रात्रिमुपयन्त्यथ यदेव द्विदिवसस्योत्तममहस्तदे-तदित्युत्तरम् ६-२-५

ये चैत्ररथस्याहनी ते कापिवनस्य त्रिवृत्पञ्चदशोऽग्निष्टोमः पूर्वमहरायुरतिरात्र उत्तरम् ६-२-६

आभिप्लविकस्य प्रथमस्याह्न आज्यबहिष्पवमानं मध्यंदिनश्च रथंतरँ स्वारं च सौपर्णँ शग्ध्यू षु शचीपत इत्यभीवर्तः स्वासु कालेयँ स्वादिष्ठया मदिष्ठयेति गायत्रँ स्वाशिरां चार्को ऽया पवस्व देवयुः पवते हर्यतो हरिरिति सफाक्षारे प्र सुन्वानायान्धस इति औदलं चर्तनिधनमाज्यदोहमभि प्रियाणीति वैखानसमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम ६-३

उपो षु जातमप्तुरं दविद्युतत्या रुचा पवस्वेन्दो वृषा सुतो राजा मेधाभिरीयत इषे पवस्व धारया कया ते अग्ने अङ्गिरः पुरूरुणा चिद्ध्यस्ति तमिन्द्रं वाजयामसीयं वामस्य मन्मानो ऽस्य प्रत्नामनु द्युतमिति गायत्रं चामहीयवं चाभि सोमास आयव इति गौतमं चान्तरिक्षं च दैर्घश्रवसं च द्विहिंकारं चायँ सोम इती-निधनमाज्यदोहमन्त्यँ स्वासु वामदेव्यं मो षु त्वा वाघतश्चनेति गायत्रपार्श्वमस्तावि मन्म पूर्व्यमिति संतनि श्रायन्तियस्यर्त्तु संकृति यस्ते मदो वरेण्य इति गायत्रं चा ग्नेश्चार्को ऽभि द्युम्नं बृहद्यशः सखाय आ निषीदतेति वाचश्च साम शौक्तं च पर्यू ष्वित्यान्धीगवम् इन्द्राय सोम पातव इति यज्ञायज्ञीयं पवित्रं त इत्यरिष्टमन्त्यं विशोविशीयमग्निष्टोमसाम स्वास्वायुष उक्थानि ६-४

पवस्व वाचो अग्रिय एष देवो अमर्त्य एष धिया यात्यण्व्या होता देवो अमर्त्यो मित्रं वयँ हवामहे महाँ इन्द्रो य ओजसे न्द्रे अग्ना नमो बृहदुच्चा ते जातमन्धस इति गायत्रं च गौषूक्तं च जराबोधीयं चर्षभश्च पावमानः प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यमित्युत्सेधः परीतो षिञ्चता सुतमित्याभीशवमाथर्वणं पृश्नि तिस्रो वाच इति त्रिणिधनमाज्यदोहमन्त्यं बृहच्च सत्रासाहीयं च श्यैतं च रौरवं च

परि स्वानो गिरिष्ठा इति गायत्रं च हाविष्मतं च स सुन्वे यो वसूनां प्राणा शिशुर्महीनामिति दीर्घ श्रुध्ये अयं पूषा रयिर्भग इति निषेधश्च श्यावाश्वं च क्रौञ्चं च यज्ञायज्ञीयं च परि प्र धन्वेति वाजदावर्यो ऽया रुचेति नित्यवत्सा धर्ता दिव इति दीर्घतमसोऽर्कोऽन्त्यो वारवन्तीयमग्निष्टोमसाम स्वासु ज्योतिष्टोमोऽतिरात्रः षोडशिमान् ६-५

पवस्व वाजसातय इति तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति पञ्चयौधाजये अन्तरा गौङ्गवमौदलाज्यदोहे गौतमँ समानमितरं प्रथमेनाह्ना गर्गत्रिरात्रस्य ६-६-१

उपास्मै गायता नर उपो षु जातमप्तुरं दविद्युतत्या रुचै ते असृग्रमिन्दवो राजा मेधाभिरीयते वृषा सोम द्युमाँ असीषे पवस्व धारयाभि सोमास आयव इति गौतममन्तरिद्धं दैर्घश्रवसं त एकर्चाः सन्तनि तिसृषु पौरुमद्गं गायत्रपार्श्वं मैधातिथं त एकर्चा द्विहिंकारं तिसृषु महानाम्नयश्च वामदेव्यं च पार्थुरश्मं च श्रायन्तीयस्यर्त्तु संकृति समानमितरं मध्यमेनाह्ना गर्गत्रिरात्रस्य ६-६-२

पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुतः पवमानस्य ते कवे गायत्रादुत्तरे चत्वार एकर्चा उत्तमं च बार्हतमनुष्टुभि त्रय एकर्चा उत्तमं तृचे समानामितर-मुत्तमेनाह्ना गर्गत्रिरात्रस्य ६-६-३

प्र सोमासो विपश्चित इति गायत्रमेकस्यामाश्वमेकस्यां जराबोधीयमेकस्यां प्र सोम देववीतय इति गौङ्गवमेकस्यां पञ्चमेकस्यां यौधाजयमेकस्या-मौशनमौपगवमाष्टादँष्ट्रं प्रत्यस्मै पिपीषत इति नानदँ षोडशिसाम रात्रिः संधिः समानमितरं प्रथमेनाह्ना गर्गत्रिरात्रस्य ६-७-१

उपो षु जातमप्तुरं दविद्युतत्या रुचे षे पवस्व धारया पर्यू ष्विति श्यावाश्वमिन्द्राय सोमपातव इत्यान्धीगवम्पवित्रं त इति यज्ञायज्ञीयम-न्त्यमुद्वँशीयस्य लोके तैरश्चयमुद्वँशीयँ षोडशिसाम रात्रिः संधिः समानमितरं द्वितीयेनाह्ना गर्गत्रिरात्रस्य ६-७-२

पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुत आ ते दक्षं मयोभुवमुद्धरति जराबोधीयँ सतोबृहतीद्विपदातिच्छन्दसश्च प्रतिलोमं बार्हतान्ययं पूषा रयिर्भग इति दीर्घतमसश्चार्कः क्रौञ्चं च धर्ता दिव इति यज्ञायज्ञीयमन्त्यँ समानमितर-मुत्तमेनाह्ना गर्गत्रिरात्रस्य ६-७-३

सांवत्सरिकस्य विषुवतो बहिष्पवमानमुभौ पर्यासावाश्वादुत्तरे सोमसाम च रोहितकूलीयं च पवस्वेन्द्रमच्छेति सफा क्षारे समानमितरं प्रथमेनाश्वत्रिरात्रस्य ६-८-१

वृषा सोम द्युमाँ असि वृषा ह्यसि भानुनैते सोमा अभि प्रियँ सोमः पुनानो अर्षत्युत्ते शुष्मास ईरत इति पुरस्तात्पर्यासस्याहरत्यामहीयवादुत्तराण्या-शुभार्गवप्रभृतीनि षड् द्विहिंकारादुत्तराण्यच्छिद्रं च मैधातिथं च पौरुहन्मनमग्नेश्चार्कादुत्तराणि सुरूपप्रभृतीनि चत्वारि यज्ञायज्ञीयात्पूर्वाण्या-सितं च कौत्सं च शुद्धाशुद्धीयं च क्रौञ्चं च रयिष्ठँ समानमितरं मध्यमेनाह्ना गर्गत्रिरात्रस्या ६-८-२

अष्टर्चादुत्तरन्नवमादह्नश्चतुरः षड्चानुपहरत्या ते दक्षं मयोभुवमिति पर्यास ऋषभात्पवमानादुत्तराणि सुरूपं चा दारसृच्चे डानां च संक्षारः स्वारं च सैन्धुक्षितं पृश्निन उत्तरान्यर्कपुष्पं कौल्मलबर्हिषं देवस्थानँ हाविष्मता-दुत्तराणि शांमदप्रभृतीनि चत्वारि यज्ञायज्ञीयादुत्तरं यद्वाहिष्ठीयँ समानमितर-मुत्तमेनाह्ना गर्गत्रिरात्रस्य ६-८-३

ये गर्गत्रिरात्रस्य प्रथमोत्तमे अहनी ते अन्तर्वसोः ६-९-१

उपो षु जातमप्तुरं दविद्युतत्या रुचा पवस्वेन्दो वृषा सुतो राजा मेधाभिरीयत एते असृग्रमिन्दवो वृषा सोम द्युमाँ असि वृषा ह्यसि भानुनेषे पवस्व धारयाअथ यदेव छन्दोमपवमानस्य मध्यममहस्तदेतत्तस्य तृचक्लृप्त आर्भवो ६-९-२

यान्तर्वसोः प्रथमा सा पराकस्य ६-९-३

वृषा सोम द्युमाँ असि वृषा ह्यसि भानुनेति पुरस्तात्पर्यासस्याहरत्यामहीयवादुत्तरे आशु च भार्गवं मार्गीयवं चा ग्नेश्चार्कादुत्तरे सुरूप भासे यज्ञायज्ञीयात्पूर्वे आसित कौत्से समानमितरं मध्यमेनाह्ना गर्गत्रिरात्रस्य ६-९-४

व्युष्टेरुत्तरस्याह्नो बहिष्पवमानमथ यदेव छन्दोमपवमानस्योत्तममहस्ततेतत्तस्य शशकर्णक्लृप्ता बृहती ६-९-५

उपास्मै गायता नरो बभ्रवे नु स्वतवसे प्र यद्गावो न भूर्णय आशुरर्ष बृहन्मते पवमानस्य ते कवे ऽग्न आ याहि वीतय इत्याज्यानि प्र सोमासो विपश्चित इति गयत्रं चाश्वं च जराबोधीयं चाशु भार्गवं प्र सोम देववीतय इति पञ्चं गौङ्गवं यौधाजयमौशनमन्त्यँ रथंतरं च वामदेव्यं च नौधसं च कालेयं च स्वादिष्ठया मदिष्ठयेति गायत्र सँहिते पवस्वेन्द्रमच्छेति सफपौष्कले प्र सुन्वानायान्धस इत्यौदलं गौतममाकूपारमभि प्रियाणीति द्वीडः पदस्तोभोऽन्त्यो यज्ञायज्ञीयमग्निष्टोमसाम ७-१

पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुतो वृषा सोम द्युमाँ असि वृषा ह्यसि भानुना सोमः पुनानो अर्षति पवमानस्य ते वयमग्निं दूतं वृणीमह इत्याज्यानि वृषा पवस्व धारयेति गायत्रं च हाविष्मतं चाजिगं च स्वारं च सौपर्नं पुनानः सोम धारयेत्यायस्ये अन्तरा दैर्घश्रवसं वृषा शोन इति पार्थमन्त्यं बृहच्च वामदेव्यं च श्यैतं च माधुच्छन्दसं च यस्ते मदो वरेण्य इति गायत्रं च स्वाशिरां चार्कस्त्वँ ह्यङ्ग दैव्य पवस्व देववीतय इति शङ्कुसुज्ञाने अयं पूषा रयिर्भग इत्यासितं द्वे क्रौञ्चे वृषा मतीणां पवत इति चतुरिडः पदस्तोभोऽन्त्यो यज्ञायज्ञीयमग्निष्टोमसामौ शनँ सौभरमाष्टादँष्ट्रम् ७-२

दविद्युतत्या रुचै ते असृग्रमिन्दवो राजा मेधाभिरीयते ऽसृक्षत प्र वाजिन एते सोमा अभि प्रियमिषे पवस्व धारयाग्निनाग्निः समिध्यत इत्याज्यान्युच्चा ते जातमन्धस इति गायत्रं च क्षुल्लकवैष्टम्भमैडँ सौपर्णमभि सोमास आयव इति गौतमं चान्तरिक्षं च मैधातिथं च द्विहिंकारं च तिस्रो वाच इत्यङ्गिरसाँ संक्रोशोऽन्त्यो ऽभि त्वा वृषभा सुत इति रथंतरं कस्तमिन्द्र त्वावसविति

वामदेव्यँ श्रायन्तीयं च रौरवं च तिस्रो वाच उदीरत इति गायत्रं चाग्नेश्चर्क श्रा सोता परि षिञ्चत सखाय श्रा नि षीदतेति वाचश्च साम शौक्तं च सुतासो मधुमत्तमा इति त्वाष्ट्रीसामनी स्वारे श्रन्तरान्धीगवं पवित्रं त इति षडिडः पदस्तोभोऽन्त्यो यज्ञायज्ञीयमग्निष्टोमसामा युष उक्थानि ७-३

पवमानो श्रजीजनदेष देवो श्रमर्त्य एष धिया यात्यरण्व्या ते दक्षं मयोभुवँ होता देवो श्रमर्त्यो यदद्य सूर उदिते महाँ इन्द्रो य श्रोजसेयं वामस्य मन्मनो ऽस्य प्रत्नामनु द्युतमिति गायत्रमामहीयवँ सत्रासाहीयं परीतो षिञ्चता सुतमिति पृश्नि चाथर्वणं चाभीशवं चोत्सेधश्चायँ सोम इतीहवद्वासिष्ठमन्त्यं यज्ञायथा श्रपूर्व्येति बृहदेदु मधोर्मदिंतरमिति वामदेव्यं त्रैशोकं च समन्तं च परि स्वानो गिरिष्ठा इति गायत्रं च गौषूक्तं च स सुन्वे यो वसूनां प्राण शिशुर्महीनामिति दीर्घ वारवन्तीये पुरोजिती वो श्रन्धस इति निषेधश्च श्यावाश्वं च परि प्र धन्वेति दीर्घतमसोऽर्को धर्ता दिव इत्यष्टेडः पदस्तोभोऽन्त्यो यज्ञायज्ञीयमग्निष्टोमसाम साकमश्वं त्रैककुभं नार्मेधं गौरीवितँ षोडशिसाम रात्रिः संधिः ७-४

उपो षु जातमप्तुरमित्यनुरूपो नौधसं ब्रह्मसाम सुज्ञानस्य लोके पौस्कलं प्र सुन्वानायान्धस इत्यौदल गौतमे समानमितरं प्रथमेनाह्नाभिप्लविकेन ७-५-१

श्रजिगक्रौञ्चे उद्धरति स्वे उष्णिक्ककुभौ स्वासु यामँ समानमितरं द्वितीयेनाह्ना चतुर्वीरस्या ७-५-२

श्रसृक्षत प्र वाजिन इत्युद्धरत्यग्नेरर्कादुत्तरमैडँ सैन्धुक्षितमभ्यासवतस्त्वा-ष्ट्रीसाम्नो लोके त्रिणिधनं त्वाष्ट्रीसाम स्वास्वरिष्टँ समानमितरं तृतीयेनाह्ना चतुर्वीरस्य ७-५-३

वारवन्तीयस्य लोके श्रुध्यं विपरिहरत्यानुष्टुभे द्विपदासु वारवन्तीयं दीर्घतमसोऽर्कोऽन्त्यः समानमितरमुत्तमेनाह्ना चतुर्वीरस्य ७-५-४

या जामदग्न्यस्य प्रथमा सा सँसर्पस्य ७-६-१

नवर्चसौपर्णे उद्धरति परीतो षिञ्चता सुतमिति बार्हदुक्थं च दैर्घश्रवसं चा यास्ये समानमितरं द्वितीयेनाह्ना जामदग्न्यस्य ७-६-२

द्वादशाहिकस्य तृतीयस्याह्न आज्यबहिष्पवमानं गायत्री च समानमितरं तृतीयेनाह्ना जामदग्न्यस्य ७-६-३

उद्धरति पर्यासं व्रात्या गायत्री पुनानः सोम धारयेति बृहती गौषूक्तादुत्तरं वारवन्तीयं पुरोजिती वो अन्धस इति निषेधः श्यावाश्वं त्वाष्ट्रीसामा हरति द्विपदातिच्छन्दसः समानमितरमुत्तमेनाह्ना जामदग्न्यस्य ७-६-४

प्र सोमासो विपश्चित इति गायत्रमेकस्यामाश्वमेकस्यां जराबोधीयमेकस्यां प्र सोम देववीतय इति यौधाजयं तिसृषु समानमितरं प्रथमेनाह्ना सँसर्पस्य ७-७-१

पुनानः सोम धारयेत्यायस्ये समानमितरं द्वितीयेनाह्ना सँसर्पस्य ७-७-२

सैन्धुक्षितान्धीगवे उद्धरति समानमितरं तृतीयेनाह्ना सँसर्पस्य ७-७-३

जराबोधीयवारवन्तीये उद्धरति द्विपदातिच्छन्दसश्च परीतो षिञ्चता सुतमिति पृश्नि आभीशवमाथर्वणं ज्योतिष्टोम्यनुष्टुप् समानमितरमुत्तमेनाह्ना सँसर्पस्य ७-७-४

वैश्वामित्रो द्व्यहो जराबोधीयस्य लोके सोमसाम स्वाशिरामर्कस्य मौक्षँ सौभरस्यौपगवं ७-८-१

द्वादशाहिकं तृतीयमहर्वैरूपस्य लोके रथंतरं पाष्ठौहस्याग्नेरर्को गौरीवितस्य त्वाष्ट्रीसाम तस्यैतस्य त्र्यहस्याभ्यासङ्गः स्वदिष्ठया मदिष्ठयेति गायत्र साँहिते तृचयोर्गौतमं तृच आसितं तृचे वाचश्च साम शौक्तं तृचयोः ७-८-२

पवमानो अजीजनत्पुनानो अक्रमीदभि प्र यद्गावो न भूर्णय आशुरर्ष बृहन्मते हिन्वन्ति सूरमुस्रयोऽग्निर्वृत्राणि जङ्घनदिति होतुराज्यँ स्वान्युत्तराणि पवस्व दक्षसाधन इति गयत्रमदारसृत्सत्रासाहीयं तवाहँ सोम रारणेत्याष्टादँष्ट्रमा- भीशवँ स्वःपृष्ठमाङ्गिरसमु हु वा अस्येति वासिष्ठमन्त्यं बृहच्च वामदेव्यं च त्रैशोकं च पृश्नि च परि प्रिया दिवः कविरिति गायत्रँ स्वाशिरामर्को बृहद्भारद्वाजं त्वँ ह्यङ्ग दैव्य सोमः पुनान ऊर्मिणेति बृहत्क क्रोशे पुरोजिती वो अन्धस इति नानदं त्वाष्ट्रीसामा थर्वणं प्रो अयासीदिति लौशमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम सैन्धुक्षितँ सौभरमुद्वँशीयम् ७-९

पवमानस्य विश्वविदसृक्षत प्र वाजिन एष देवो अमर्त्य एष धिया यात्यण्व्याते दक्षं मयोभुवँ होता देवो अमर्त्यः पुरूरुणा चिद्धचस्त्युत्तिष्ठन्नोजसा सह यज्ञस्य हि स्थ ऋत्विजास्य प्रत्नामनु द्युतमिति गायत्रं चामहीयवं च जराबोधीयं च र्षभश्च पवमानः परीतो षिञ्चता सुतमिति परीतो षिञ्चता सुतमिति वाम्रं च मानवं चा नूपं चो त्सेधश्चा यँ सोम इती हवद्वासिष्ठमन्त्यँ रथंतरं च वामदेव्यं च श्रायन्तीयं च वैयश्वं च परि स्वानो गिरिस्था इति गायत्रं गौषूक्तं वारवन्तीयँ स सुन्वे यो वसूनां प्राणा शिशुर्महीनामिति दीर्घ श्रुध्ये सोमाः पवन्त इन्दव इति श्यावाश्वा न्धिगवे निषेधः परि प्र धन्वेति वाजदावर्यो ऽया रुचेति नित्यवत्सा धर्ता दिव इति दीर्घतमसोऽर्कोऽन्त्यो यज्ञायज्ञीयमग्निष्टोमसाम चातुर्वीरोऽतिरत्रः षोडशिमान् ७-१०

एष एव चतुरहो यो देवानां पञ्चरात्रस्यानभ्यासक्तः पुनर्जराबोधीयँ स्वं लोक- मेति चतुर्थादह्न उत्तरँ षड्चँ सत्रासाहीयमाभीशवं बृहद्भारद्वाजमाथर्वणं तान्युद्धरति ७-११-१

पवमानस्य विश्वविद् यत्सोम चित्रमुक्थ्यमसृक्षत प्रवाजिन उत्ते शुष्मास इरत आ ते दक्षं मयोभुवमिन्द्रग्नि युवामिम इत्यैन्द्राग्नमृषभजराबोधीये उद्धरत्युत्सेधस्य लोकेऽग्नेस्त्रिणिधनमसाव्यँशुर्मदायेति गायत्रं च गौषुक्तं च पवस्व वाजसातय इति श्यावाश्वा न्धीगवे उद्धरति द्विपदातिच्छन्दसः समानमितरमुत्तमेनाह्ना देवानां पञ्चरात्रस्य ७-११-२

ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थ्यो महाव्रतं गौरुक्थ्य आयुरतिरात्र एकाहक्लृप्ताः ७-११-३

पृष्ठ्यः षडहः समूढो वा व्यूढो वा समूढस्त्वेव तस्यो पास्मै गायता नर उपो षु जातमप्तुरं पवमानस्य ते कव इति प्रथमस्याह्नो बहिष्पवमानमौदलमासितं त्वाष्ट्रीसामा विक्लृप्तं चतुर्थमहस्त्वाष्ट्रीसाम क्रौञ्चमेते स्वराः पृष्ठ्यस्य गौरीवितलोक उद्वँशपुत्राद्रात्रिमुपयन्ती ति यदि व्यूढः ७-१२-१

अथ यदि समूढ एतदेव प्रथमस्याह्नो बहिष्पवमानमेते स्वरा द्वितीयस्याह्नो वृषा शोण इति पार्थमन्त्यं पञ्चमस्याह्नः पार्थस्य लोक आकूपारं यन्नवमेऽहनि सांवत्सरिकः समूढ उत्तरस्य त्र्यहस्याविक्लृप्ता बृहत्यः सर्वस्य षडहस्यै ७-१२-२

एष एव त्र्यहो य ऋतूनां यथा व्यूढे तृतीयस्याह्नो वैरूपस्य लोके रथंतरँ सुतासो मधुमत्तमा इति त्रीणि त्वाष्ट्रीसूमान्यैडं मध्ये स्वारे अभितो बृहत्तिसृषु ज्योतिर्गौरायुरतिरात्र एकाहक्लृप्ताः ७-१२-३

एष एव पञ्चाहो य ऋतूनाँ समूढोऽभ्यासक्तो बृहद्रथंतरपृष्ठः प्रथमस्याह्नः स्वादिष्ठार्भवीया द्वितीयस्याह्नो वासिष्ठमन्त्यँ स्वस्थाने पार्थं चतुर्थस्याह्न और्णायवस्योपरिष्टाद्बृहद्भारद्वाजमान्धीगवस्य शुद्धाशुद्धीयमुद्धरति षोडशिनं पञ्चमस्याह्नः संतनिनि उपरिस्तादैडं च सैन्धुक्षितं गौसूक्तं च ७-१२-४

विश्वजिदतिरात्रः ७-१२-५

एष एव षडहो य ऋतूनाँ समूढो वा व्यूढो वा समूढस्त्वेवै काहिकं व्रतं तस्य ज्योतिष्टोमोऽतिरात्रः षोडशिमान् ७-१३-१

एष एव षडहो य ऋतूनाँ समूढो वा व्यूढो वा समूढस्त्वेव सप्तदशं व्रतं तस्योपास्मै गायता नरः पवस्व वाचो अग्रियो दविद्युतत्या रुचोत्ते शुष्मास ईरते पवमानस्य ते कव इति बहिष्पवमानमुत्तरे गायत्र्या उद्धरति पूर्वे अनुष्टुभः

समानमितरं पूर्वेण व्रतेन तस्य स्तोमान्वयीन्युक्थान्येकविँशः षोडशि ७-१३-२

एष एव षडहो य ऋतूनाँ समूढो वा व्यूढो वा समूढस्त्वेव छन्दोमपवमानं व्रतं तस्य पवमानस्य ते वयमिति चतुर्ऋचस्य लोके तृचं विपरिहरति सत्रासाहीयजराबोधीये आशु च भार्गवं मार्गीयवं च सौमित्रं चैटतं च यौधाजयादुत्तराणि बार्हदुक्थं च द्वैगतं च पौरुहन्मनं च स्वाशिरामर्कादुत्तराणि शांमदप्रभृतीनि चत्वार्यान्धीगवादुत्तरान्याकूपारं च साध्रं च स्वासु धर्म समानमितरं प्रथमेन व्रतेन सप्तरात्रिकेण ७-१३-३

एष एव षडहो य ऋतूनाँ समूढो वा व्यूढो वा समूढस्त्वेव तस्याभ्यासक्तः पञ्चाहो यथा पृष्ठ्यावलम्बे चतुर्थस्याह्न एकविँशः षोडशी पञ्चमस्याह्नः पार्थस्य लोक आकूपारं वात्रेयं वे ति यदि समूढो ऽथ यदि व्यूढश्चतुर्थस्याह्नः शुद्धाशुद्धीयस्य लोक आकूपारं पञ्चमस्याह्नः पार्थस्यात्रेयं पार्थं वैव छन्दोमवतो व्रतस्य बहिष्पवमानँ सप्तदशं व्रतँ समानमितरं ७-१३-४

ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थ्य आयुरुक्थ्योऽभिजिदग्निष्टोमो विश्वजिदग्निष्टोमः सर्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्र एकाहक्लृप्ताः ७-१३-५

या देवानां पञ्चरात्रस्य प्रथमा सा जनकलप्तरात्रस्यानभ्यासक्ता ७-१४-१

स्तोत्रीयानुरूपौ पर्यासो वृषा पवस्व धारयेति गायत्रँ हाविष्मतम् आजिगं त एकर्चाः पुनानः सोम धारयेति त्रिणिधनमायास्यं तिसृषु मौक्षस्य लोके स्वाशिरामर्क औपगवस्य सौभरँ समानमितरं द्वितीयेनाह्ना देवानां पञ्चरात्रस्य ७-१४-२

स्तोत्रीयानुरूपौ पर्यास उच्चा ते जातमन्धस इति गायत्रं क्षुल्लकवैष्टम्भँ स्वारँ सौपर्णं त एकर्चा अभि सोमास आयव इत्यन्तरिक्षं तिसृषु महावैष्टम्भस्य लोके श्रायन्तीयँ समानमितरं तृतीयेनाह्ना देवानां पञ्चरात्रस्य ७-१४-३

स्तोत्रीयानुरूपौ पर्यासः पवस्व दत्तसाधन इति गायत्रमदारसृत्सत्रासाहीयं त एकर्चास्तवाहँ सोम रारणेति स्वःपृष्ठमाङ्गिरसं तिसृषु स्वाशिरामर्कस्य लोके गौषूक्तं लौशस्य दीर्घतमसोऽर्कः सौभरस्य त्रैककुभँ समानमितरं चतुर्थेनाह्ना पञ्चशारदीयस्य ७-१४-४

विश्वजिन्महाव्रतं ज्योतिष्टोमोऽतिरात्रः षोडशिमानेकाहक्लृप्ताः ७-१४-५

एष एव षडहो य ऋतूनाँ समूढोऽनभ्यासक्तो बृहद्रथंतरपृष्ठ्यश्चतुर्थस्याह्नः प्रत्यस्मै पिपीषत इति गौरीवितँ षोडशिसाम षष्ठस्याह्नो रेवतीनां लोके दार्ढच्युतं विपरिहरत्यौद्दणोरन्ध्रे विश्वजिदतिरात्रः ७-१५-१

एष एव षडहो य ऋतूनाँ समूढो वा व्यूढो वा समूढस्त्वेवै काहिकं व्रतं ज्योतिष्टोमोऽतिरात्रोऽषोडशिकः ७-१५-२

एष एव षडहो य ऋतूनाँ समूढो वा व्यूढो वा समूढस्त्वेव ज्योतिर्गौरायुरतिरात्र एकाहक्लृप्ताः ७-१५-५

ज्योतिष्टोमोऽग्निष्टोमो गौर् उक्थ्य आयुरुक्थ्यस्तस्यायुषः पुरोजिती वो अन्धस इति श्यावाश्वमेकस्यामान्धीगवमेकस्यामाकूपारमेकस्यां बृहत्तिसृषु बृहन्निधनं वार्कजम्भं पृष्ठ्यावलम्बस्य पञ्चाहो विश्वजिदतिरात्रो विश्वजिदतिरात्रः ७-१५-४

अग्न आयूँषि पवस इत्यनुरूपः शग्ध्यू षु शचीपत इत्यभीवर्तो ब्रह्मसाम प्र सुन्वानायान्धस इत्यौदलदैवोदसे अभि प्रियाणीति यज्ञायज्ञीयमन्त्यं नमस्ते अग्न ओजस इति जराबोधीयमग्निष्टोमसाम स्वासु वा समानमितरं प्रथमेनाह्ना जनकस्य सप्तरात्रस्य ८-१-१

वृषा मतीनां पवत इति यज्ञायज्ञीयमन्त्यँ सौभरमग्निष्टोमसाम स्वासु समानमितरं द्वितीयेनाह्ना देवानां पञ्चरात्रस्य ८-१-२

दविद्युतत्या रुचै ते असृग्रमिन्दव इषे पवस्व धारयाग्निनाग्निः समिध्यत इत्याज्यान्युच्चा ते जातमन्धस इति गायत्रमेकस्यां वैरूपमेकस्याँ सौमित्रमेकस्यामा सोम स्वानो अद्रिभिरित्यन्तरिक्षं तिसृषु तिस्रो वाच इत्यङ्गिरसाँ संक्रोशोऽन्त्यो रथंतरं च वामदेव्यं च नौधसं च रौरवं च तिस्रो वाच उदीरत इति गायत्रं च क्षुल्लकवैष्टम्भं चा-सोता परिषिञ्चत सखाय आ निषीदतेति वाचश्च साम शौक्तं च सुतासो मधुमत्तमा इति त्वाष्ट्रीसाम चान्धीगवं च पवित्रं त इति यज्ञायज्ञीयमन्त्यँ श्रुध्यमग्निष्टोमसाम स्वासु ८-२

पवमानो अजीजनत्पुनानो अक्रमीदभि राजा मेधाभिरीयते तं त्वा नृम्णानि बिभ्रतं हिन्वन्ति सूरमुस्रयो ऽग्निर्वृत्राणि जङ्घनदिति होतुराज्यँ स्वान्युत्तराणि पवस्व दक्षसाधन इति गायत्रं च त्वाष्ट्रीसाम च यदीङ्खयन्तीरित्यभि सोमास आयव इत्याष्टादँष्ट्रं चाथर्वणं चाभीशवं च स्वःपृष्ठमाङ्गिरसमु हु वा अस्येति वासिष्ठमन्त्यं बृहच्च वामदेव्यं च वयमेनमिदा ह्य इति वासिष्ठँ स्वासु पृश्नि परि प्रिया दिवः कविरिति गायत्रं चौर्णायवं च त्वँ ह्यङ्ग दैव्य सोमः पुनान ऊर्मिणेति बृहत्क क्रोशे पुरोजिती वो अन्धस इति यज्ञायज्ञीयं च क्षुल्लककालेयं च प्र त आश्विनीः पवमान धेनव इति लौशमन्त्यं विशोविशीयमग्निष्टोमसाम स्वासु ८-३

पवमानस्य विश्वविद्यत्सोम चित्रमुक्थ्यं प्र यद्गावो न भुर्णय आशुरर्ष बृहन्मते यास्ते धारा मधुश्चुतोऽग्ने स्तोमं मनूमह इति होतुराज्यँ स्वान्युत्तरानि अर्षा सोम द्युमत्तम इति गायत्रँ यणवँ शाकलँ सोम उ ष्वाणः सोतृभिरिति वाम्रमनूपमग्नेस्त्रिणिधनमभि त्रिपृष्ठमिति संपान्त्या रथंतरं च वामदेव्यं चेन्द्रमिद्देवतातये त्वमिन्द्र यशा असीति यौक्तश्रुचं च द्विहिंकारं चासाव्यँशुर्मदायेति गायत्रं च गौषूक्तं चाभि द्युम्नं बृहद्यशः प्राणा शिशुर्महीनामिति च्यावन वार्शे पवस्व वाजसातय इति यज्ञायज्ञीयं च रयिष्ठं च गोवित्पवस्वेति द्व्यभ्याघातं लौशमन्त्यमग्निं नर इति बृहदाग्नेयमग्निष्टोमसाम तृतीयस्याह्न उक्थानि ८-४

असृक्षत प्र वाजिन एतमु त्यं दश क्षिपो बभ्रवे नु स्वतवस इति षड्चस्य

तृचमुत्ते शुष्मास ईरत एते सोमा असृक्षत यमग्ने पृत्सु मर्त्यमिति होतुराज्यँ स्वान्युत्तराणि पवमानस्य जिघ्नत इति गायत्रं चादारसृच्च परीतो षिञ्चता सुतमिति शौक्तं च यशश्चाभीशवं च प्रतोदश्च साकमुक्ष इतीहवद्वासिष्ठमन्त्यं बृहच्च वामदेव्यं च श्रायन्तीयं च पृष्ठं च त्वँ सोमासि धारयुरिति गयत्रं चा-श्वसूक्तं च स सुन्वे यो वसूनां तं वः सखायो मदायेति दीर्घं च कार्णश्रवसं च सोमाः पवन्त इन्दव इति क्रौञ्चे त्रिरस्मै सप्त धेनवो दुदुह्रिर इति मरुतां धेन्वन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम ८-५

ये सोमासः परावत्यमित्रहा विचर्षणिः प्र स्वानासो रथा इवासृग्रमिन्दवः पथा ते दक्षं मयोभुवँ होता देवो अमर्त्यः प्र वो मित्राय गायतेन्द्रा याहि चित्रभानविन्द्राग्नी रोचना दिवो ऽध्वर्यो अद्रिभिः सुतमिति गायत्रं च मार्गीयवं चैडं च सौपर्णँ रोहितकूलीयं च तवाहँ सोम रारणेति पौरुहन्मनं च द्वैगतं च गौङ्गवं च द्विनिधनं चायस्यं प्र काव्यमुशनेव ब्रुवाण इति वाराहमन्त्यँ रथंतरं च वामदेव्यं च वाशं च वैयश्वं च पवस्व देव आयुषगिति गायत्रँ स्वाशिरां चार्क ऐडँ सैन्धुक्षितमेष स्य धारया सुतो गोमन्न इन्द्र अश्ववदिति शार्कर त्रैते पुरोजिती वो अन्धस इति क्रौञ्चं गौतमं यज्ञायज्ञीयं प्रो अयासीदित्यैडं यज्ञसारथ्यन्त्यमा ते अग्न इधीमहीति स्रौग्मतमग्निष्टोमसाम ८-६

पवमान असृक्षतापघ्नन्पवते मृधः पवस्व देववीरति सना च सोम जेषि च तरत्स मन्दी धावत्यया वीती परि स्रव विश्वेभिरग्ने अग्निभिर्यदस्य सूर उदिते महाँ इन्द्रो य ओजसा तोशा वृत्रहणा हुव इन्द्रायेन्दो मरुत्वत इति दार्ढच्युतपञ्चमानि मृज्यमानः सुहस्त्येति गोष्ठपञ्चमानि हा उ हु वा इ शिशुमिति वासिष्ठमन्त्यं बृहच्च वामदेव्यं च त्रैशोकं च वैखानसं च परि स्वानो गिरिष्ठा इति गायत्रं च त्रीणि च वैदन्वतानि त्वँ ह्यङ्ग दैव्य पवस्व देववीतय इति सौपर्णं च वैश्वमनसं च परि त्यँ हर्यतँ हरिमित्याकूपारं च त्वाष्ट्रीसाम च यज्ञायज्ञीयं च यद्वाहिष्ठीयं च धर्ता दिव इति दीर्घतमसोऽर्कोऽन्त्यो ऽग्निं वो देवमग्निभिः सजोषा इति रायोवाजीयमग्निष्टोमसाम सैन्धुक्षितं त्रैककुभमुद्वँशीयम् ८-७

उपो षु जातमप्तुरमेष देवो अमर्त्य एष धिया यात्यण्व्यैष कविरभिष्टुत उप त्वा

रग्वसंदृशमा नो मित्रावरुणा तमिन्द्रं वाजयामसीन्द्राग्नी श्रा गतँ सुतमुच्चा ते जातमन्धस इति गायत्रं चामहीयवं चा जिगं चाभीकं च पुनानः सोम धारयेति पौरुमद्गं चाष्कारणिधनं च काग्वं मैधातिथं चो त्सेधश्चौ शनमन्त्यँ रथंतरं च वामदेव्यं च नैपातिथं च कालेयं च स्वादिष्ठया मदिष्ठयेति गायत्रं चा ग्नेश्चार्को भि द्युम्नं बृहद्यश इन्द्रमच्छ सुता इम इत्यैशिरं च रोहितकूलीयं चाभी नो वाजसातममिति श्यावाश्वं च निषेधश्च साध्रं च यज्ञायज्ञीयं च कावमन्त्यमिमँ स्तोममर्हते जातवेदस इति समन्तमग्निष्टोमसाम ८-८-१

विश्वजिदतिरात्रः ८-८-२

या बृहस्पतिसवस्य सा कुसुरुबिन्दस्य प्रथमा तस्यै जनुषैकर्चौ ८-९-१

हाविष्मतस्य लोके यौक्ताश्वँ स्वाशिरामर्कस्य हाविष्मतँ शङ्कसुज्ञानयोः सत्रासाहीयश्रुध्ये उद्धरत्युक्थानि समानमितरं द्वितीयेनाह्ना जनकसप्तरात्रस्य ८-९-२

या पूर्वा सोत्तरा ८-९-३

पवस्वेन्द्रमच्छेति सत्रासाहीय श्रुध्ये वृषा मतीनां पवत इति याममन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम साकमश्वँ सौभरश्राष्टादँष्ट्रमित्युक्थानि समानमितरं द्वितीयेनाह्ना त्रिककुभः ८-९-४

एते श्रसृग्रमिन्दवो राजा मेधाभिरीयत इति पुरस्तात्पर्यासस्य तृचे जनुषैकर्चयोः सफपौष्कले तृतीयस्याह्न उक्थानि समानमितरं ज्योतिष्टोमेन ८-९-५

या पूर्वा सोत्तरा ८-९-६

तीव्रसुत श्राज्यबहिष्पवमानं मध्यंदिनश्च सँहितस्य लोकेऽग्नेर्रकः समानमितरमेतस्यैव राथंतरेण पञ्चदशेन ८-९-७

द्वितीयस्य स्वरसाम्न आज्यबहिष्पवमानं बृहती च पवमानस्य ते वयमिति पर्यासो मौक्षस्य लोके स्वाशिरामर्कः समानमितरमेतस्यैव बार्हतेन पञ्चदशेन ८-९-८

या पूर्वा सोत्तरा तस्याग्नेरर्कस्य लोके सँहितं कावस्य दीर्घतमसोऽर्क उद्वँशियान्तान्युक्थानि ८-९-९

एकविँशोऽतिरात्रो य एकस्तोमानामुत्तमस्तस्य स्तोमान्वयी षोडशी ८-९-११

पृष्ठ्यावलम्बस्य पञ्चाहः प्रथमस्याह्नः प्रत्नवद्बहिष्पवमानम्पञ्चमस्याह्नो ऽसृक्षतेत्यनुरूपो ८-१०-१

ये सोमासः परावतीति प्रतिपदृतावाणं वैश्वानरमिति होतुराज्यं कण्वरथंतरस्य लोके सोमसाम प्र काव्यमुशनेव ब्रुवाण इति वाराहमन्त्यमत्रेयँ स्वरः प्रो अयासीदित्यैडं यज्ञसारथ्यन्त्यँ समानमितरँ सप्तमेनाह्ना द्वादशाहस्य ८-१०-२

हिन्वन्ति सूरमुस्रय इति प्रतिपद्विश्वेभिरग्ने अग्निभिरिति होतुराज्यमु हु वा इ शिशुमिति वासिष्ठमन्त्यँ कौत्सँ स्वरो हा उ धर्तेत्यैडँ शार्गमन्त्यँ समानमितरमष्टमेनाह्ना द्वादशाहस्यो ८-१०-३

उपोषु जातमप्तुरमिति प्रतिपदुप त्वा रण्वसंदृशमिति होतुराज्यँ हा उ हु वा अक्रानिति वासिष्ठमन्त्यं परि त्यं हर्यतँ हरिमिति गौरीवितलोक आसितमेकस्यां दीर्घतमसोऽर्क एकस्यामाकूपारमेकस्यां यत्स्वयोन्यसावि सोमो अरुषो वृषा हरिरित्यैडं यामँ समानमितरं नवमेनाह्ना द्वादशाहस्य ८-१०-४

अन्तरोत्सेधनिषेधौ मैधातिथआ जागृविरित्यौशनमन्त्यँ स्वासु रथंतरवामदेव्ये परि प्र धन्वेति वाजजित्सूर्यवतीषु कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम समानमितरं दशमेनाह्ना द्वादशाहस्य ८-१०-५

विश्वजिदतिरात्रः ८-१०-६

त्रिष्टोमोऽग्निष्टोमोऽयमेव तस्य सवनभाज स्तोमाः समावद्भाजो वा ८-११-१

ज्योतिरुक्थ्यस्तस्य साहस्रं बहिष्पवमानं यथा प्रथमस्य सँहितस्य लोके मौक्षं नार्मेधस्याष्टादँष्ट्रमुद्धरति रात्रिँ समानमितरं द्वितीयेनैकस्तोमेन ८-११-२

या पूर्वा सोत्तरा ८-११-३

गौरुक्थ्यो ८-११-४

अभिजिदग्निष्टोमस्तस्याभिजितः पुनानः सोम धारयेत्यभीवर्तस्तिसृषु रौरवमेकस्यां कण्वरथंतरमेकस्यां मैधातिथमेकस्यां यौधाजयं तिसृषु यद्यु वै कण्वरथंतरं तृचस्थं चिकीर्षेदभीवर्तकण्वरथंतरे अन्योन्यस्य स्थानं व्यतिहरेत्कण्वरथंतरयौधाजये वा समानमितरं ८-११-५

या पूर्वा सोत्तरा ८-११-६

विश्वजिदग्निष्टोम आयुरुक्थ्यो विश्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्र एकाहक्लृप्ताः ८-११-७

पृष्ठ्यावलम्बस्य पञ्चाहः पृष्ठ्यस्तोमस्य षष्ठमहर्वैदन्वतेभ्य उत्तरम्पयः षट्त्रिँशं तृतीयसवनँ सोक्थं त्रयश्छन्दोमा एवमेव समूढाः पुनः कण्वरथंतरँ स्वं लोकमेति चतुष्टोमयोः पूर्वो विश्वजिदतिरात्रो विश्वजिदतिरात्रः ८-११-८

द्वादशाहस्य षोडशिमन्तावतिरात्रौ ९-१-१

त्रयोदशरात्रे प्रथमस्य छन्दोमस्य कण्वरथंतरस्य लोके सोमसाम पुनानः सोम धारयेत्येतत् ९-१-२

सांवत्सरिकं व्रतँ सत्त्रेषु ९-१-३

यत्रातिरात्रात्पृष्ठ्यमुपयन्ति प्रथमस्याह्नोऽस्यप्रत्नानुरूपो यत्र वा त्रिकद्रुकेभ्यो ९-१-४

यत्र ज्योतिर्गौरायुस्त्र्यह ऐकाहिकास्ते गौरीवितस्वरा एत एवावृत्ता यत्रायुर्गौर्ज्योतिरतिरात्रः ९-१-५

एते एव गोश्रायुषी रात्रिसत्त्रेष्वन्यत्र यमातिरात्राभ्यश्च सम्वत्सरसंमिताभ्यश्च ९-१-६

क्लृप्तं प्रथमं पञ्चदशरात्रं ९-१-७

द्वितीयस्य पञ्चदशरात्रस्यातिरात्रस्त्रिवृदग्निष्टुदग्निष्टोमो यस्य वायव्यास्वग्निष्टोमसाम तस्याग्निः प्रत्नेन जन्मनेति होतुराज्यं गौरीवितमनुष्टुभि ९-१-८

उएष एवोत्तरासु तस्य स्वान्याज्यानि ९-१-९

क्लृप्तमा सप्तदशरात्रात् ९-१-१०

सप्तदशरात्रे चत्वार्याभिप्लविकान्यहानि श्यैतनौधससामानि पौष्कलश्रुध्यौष्णिहानि प्रथमस्याह्न एषप्रत्नानुरूपः पञ्चमस्याह्नो द्वे सवने षष्ठस्य तृतीयसवनं तस्य नौधसं ब्रह्मसाम श्रुध्यमुष्णिहि यजिष्ठं त्वा ववृमह इत्यैध्मवाहं त्रैककुभं नार्मेधमैध्मवाहँ सौश्रवसं मारुतमिति वा ९-२-१

यत्रातिरात्रादभिप्लवमुपयन्ति प्रथमस्याह्न एषप्रत्नानुरूपो यत्र वा त्रिकद्रुकेभ्यो यत्राभिप्लवो रात्रिसत्त्रेषु श्यैतनौधसब्रह्मसाम पौष्कलश्रुध्यौष्णिहोऽन्यत्र संवत्सरसंमिताभ्यः क्लृप्तमा विँशतिरात्रात् ९-२-२

विँशतिरात्रे सांवत्सरिकौ विश्वजिदभिजितावभितो यथा पूर्दशरात्र एवं बृहती ९-३-१

पूर्वस्यैकविँशतिरात्रस्याषोडशिकावतिरात्रावभितः षोडशिमान्मध्ये सर्वे वा-षोडशिकाः सर्वे त्वेव षोदशिमन्तः ९-३-२

उत्तरस्यैकविँशतिरात्रस्य संवत्सरक्लृप्तान्यहान्यनुक्लृप्ताभीवर्तकालेयः पृष्ठ्यः श्यैतनौधसब्रह्मसामानः स्वरसामानः पौष्कलश्रुध्यौष्णिहा विशुवतः सामतृचस्य लोक आभीशवँ श्रायन्त इव सूर्यमिति विकर्णँ समानमितरं ९-३-३

क्लृप्तमा सँसद्यः ९-३-४

सँसदमतिरात्रः पृष्ठ्यस्तोमः षडहः प्रथमस्याह्न एषप्रत्नानुरूपो गौरीवितमनुष्टुभ्यन्वहमविक्लृप्तं चतुर्थमहः पञ्चमस्यह्न आकूपारस्य लोके त्वाष्ट्रीसाम यद्द्व्यनुतोदं ९-३-५

पवस्वेन्दो वृषा सुत एते असृग्रमिन्दव उत नो गोषणिं धियँ शशमानस्य वा नर उप नः सूनवो गिरः प्र स्वानसो रथा इवा-सृग्रमिन्दवः पथा पवमानस्य ते वयं पवमानस्य ते कवे स्वान्याज्यानि पवमानस्य जिघ्नत इति गायत्रं चामहीयवं चै डं च सौपर्णँ रोहितकूलीयं च संतनि पुनानः सोम धारयेति समन्तं च कन्वरथंतरं च दैर्घश्रवसं च बार्हदुक्थं च यौधाजयँ स्वमन्त्यँ स्वानि पृष्ठानि पवमानो अजीजनदिति गायत्र सँहिते जराबोधीयं च सौश्रवसं च स्वे उष्णिक्ककुभावभी नो वाजसातममिति गौरीवितं च कार्तयशं च श्यावाश्वा न्धीगवे अञ्जत इति कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम ९-४

उपास्मै गायता नर उपो षु जातमप्तुरं बभ्रवे नु स्वतवस एते सोमा अभि प्रियँ सोमः पुनानो अर्षति पवमानस्य ते कवे ऽग्न आ यहि वीतय इत्याज्यानि प्र सोमासो विपश्चित इति गायत्रं चाश्वं च सोमसाम चाशु च भार्गवं मार्गीयवं प्र सोम देववीतय इति पज्रं च द्वैगतं च पौरुहन्मनं च हारायणं च

यौधाजयमौशनमन्त्यँ रथंतरं च वामदेव्यं च नौधसं च कालेयं च स्वादिष्ठया मदिष्ठयति गायत्र सँहिते काच्चीवतं च भासं च पवस्वेन्द्रमच्छेति सफाच्चारे प्र सुन्वानायान्धस इति गौरीवितं च पदनिधनं च शुद्धाशुद्धीयम् श्रौदल गौतमे कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम ९-५

एष उ स्य वृषा रथ एष वाजि हितो नृभिरिति पुरस्तात्पर्यासस्य षड्चे यौक्ताश्वादुत्तरे सुरूपं चर्षभश्च पावमान श्रायास्याभ्यां पूर्वे पृष्ठकौल्मलबर्हिषे वृषा शोण इति पार्थमन्त्यमेष स्य धारया सुत पवस्व देववीतय इति शङ्कु सुज्ञाने गौरीवितादुत्तरे यद्वाहिष्ठीया सिते समानमितरं द्वितीयेनाह्ना द्वादशाहस्य ९-६-१

उत्ते शुष्मासो श्रस्थुरिति पुरस्तात्पर्यासस्य चतुर्श्रृचमथैतदेव तृतीयम-हस्तृचक्लृप्तमेकविँशं ९-६-२

प्रज्ञत उत्तरस्त्र्यहो श्रथैतदेव त्रयस्त्रिँशमहरनिरुक्तमाहरति तस्य कणवरथंतरस्य लोक वाशं पार्थस्यौशनं बृहतो रथंतरँ श्यैतस्य नौधसँ श्रुध्यस्य पौष्कलं ९-६-३

पृष्ठ्य स्तोमः षडह श्रावृत्तः ९-६-४

त्रिवृदहरनिरुक्तं तस्य पवस्वेन्दो वृषा सुत उत नो गोषणिं धियँ शशमानस्य वा नर उप नः सूनवो गिरः पवमानस्य ते कव इति बहिष्पवमानं पवमानस्य जिघ्नत इति गायत्रमेकस्यामामहीयवमेकस्यामैडँ सौपर्णमेकस्यां पुनानः सोम धारयेति यौधाजयं तिसृषु श्यावाश्वस्य लोके गौरीवितँ समानमितरमुपहव्येन सर्वं त्रिवृत् ९-६-५

ज्योतिष्टोमोऽग्निष्टोमस्तस्यानुष्टुब्यथर्षभस्य ९-६-६

ज्योतिष्टोमोऽतिरात्रः समानमितरम् ९-६-७

क्लृप्तमा नानाब्रह्मसामभ्यः ६-६-८

नानाब्रह्मसाम्नामतिरात्रस्त्रयः पञ्चाहाः पञ्चाहक्लृप्ता नानाब्रह्मसामानः प्रथमस्य पञ्चाहस्य यथालोकं बृहद्रथंतरे नौधसँ श्यैतं महावैष्टम्भं १८ त्रैशोकमुभयँ शृणवञ्च न इति वाशमेतानि ब्रह्मसामानि द्वितीयस्य पञ्चाहस्यान्योन्यस्य लोकं बृहद्रथंतरे त्वमिन्द्र प्रतूर्तिष्वित्यभीवर्तस्त्वामिदा ह्यो नर इति मानवं यत्पृष्ठ्ये छन्दस्यं पञ्चमेऽहनि क ईं वेद सुते सचेत्याष्कारणिधनं काणवँ स्वासु यौक्तस्रुचँ स्वासु श्रायन्तीयमेतानि ब्रह्मसामानि तृतीयस्य पञ्चाहस्य यथालोकं बृहद्रथंतरे शग्ध्यू षु शचिपत इति मानवं यच्छन्दस्यं नित्यं पञ्चमेऽहनि वयमेनमिदा ह्य इति वासिष्ठम् आ त्वा सहस्रमा शतमिति भारद्वाजं यो राजा चर्षणीनामिति जनित्रं त्वमिन्द्र यश असीतीन्द्रस्य यश एतानि ब्रह्मसामानि ६-७-१

विश्वजिदतिरात्रस्तस्य गौरीवितस्य लोके नानदमग्निर्मूर्धा दिवः ककुदिति सत्रासाहीयं त्रैककुभं नार्मेधं गौरीवितँ षोडशिसाम रात्रिः संधिः ६-७-२

अथैष एव पञ्चाह आवृत्त आवृत्तस्य पञ्चाहस्यान्योन्यस्य लोकं बृहद्रथंतरे पिबा सुतस्य रसिन इति जमदग्नेरभीवर्तो यदिन्द्र प्रागपागुदगिति नैपातिथमा मन्द्रैरिन्द्र हरिभिरित्यभिनिधनं काणवं यथा गौरो अपाकृतमिति गौतमस्य मनाज्यं त्वमङ्ग प्र शँसिषमिति पौरुमीढमेतानि ब्रह्मसामानि ६-७-३

द्वादशाहस्य दशाहान्यतिरात्रो ६-७-४

मध्यमस्य त्रयस्त्रिँशद्रात्रस्य सर्वे षोडशिमन्तोऽतिरात्राः ६-७-५

उत्तमस्य त्रयस्त्रिँशद्रात्रस्यातिरात्रस्त्रयः पञ्चाहाः पञ्चाहक्लृप्ताः श्यैतनौधस-ब्रह्मसामानो यथालोकंबृहद्रथंतरा यथा वा नानाब्रह्मसामसु क्लृप्तो विश्वजिद्यो नानाब्रह्मसामस्वथैत एव पञ्चाहा आवृत्ता आवृत्तानां पञ्चाहानां प्रथमस्य पञ्चाहस्य प्रथमस्याह्नोऽभि सोमास आयव इति मानवमेकस्यां तस्यामेवानूपं बृहन्निधनं वार्कजम्भमेकस्यां मैधातिथमेकस्यां वाम्रं तिसृष्वग्नेस्त्रिणि-धनमध्यास्यायां समानमितरं ६-७-६

क्लृप्तमा विधृतिभ्यः ६-७-७

विधृतीनां ज्योतिष्टोमोऽतिरात्रोऽषोडशिकः कौत्सस्य लोक उद्वँशीयम् ग्रा त्वा विशन्त्विन्दव इत्येतासु जराबोध तद् विविड्ढि प्रति ष्या सूनरी जन्येषो उषा ग्रपूर्व्येत्येतासु गायत्रीषु जराबोधीयँ संधिषामा ६-८-१

ग्रथ यदेव कुसुरुबिन्दस्य राथंतरं त्रिवृदहस्तदेतत्तस्य गौरीवितमनुष्टुभि यद्वार्हतं त्रिवृदहस्तदुत्तरं पवमानस्य ते कव इति पर्यासो यौक्ताश्वस्य लोके हाविष्मतं माधुच्छन्दसस्य कालेयँ हाविष्मतस्य मौद्मं गौरीवितमनुष्टुभि साकमश्वँ सौभरमाष्टादँष्ट्रमित्युक्थानि समानमितरं या पूर्वा सोत्तरा तस्याः प्रमँहिष्ठीयँ हारिवर्णमुद्वँशीयं तैरश्चयं वेत्युक्थानि ६-८-२

ज्योतिष्टोमोऽतिरात्रः षोडशिमान् कौत्सस्य लोक उद्वँशीयमा त्वा विशन्त्विन्दव इत्येतास्वग्ने वाजस्य गोमत उषस्तच्चित्रमाभराश्विन वर्तिरस्मदेत्येतासूष्णिक्षु श्रुध्यँ संधिषामा ६-८-३

ग्रथ यदेव कुसुरुबिन्दस्य राथंतरं पञ्चदशमहस्तदेतत् तस्य गौरीवितमनुष्टुभि यद्वार्हतं पञ्चदशं तदुत्तरं पवमानस्य ते कव इति पर्यासो माधुच्छन्दसस्य लोके कालेयं गौरीवितमनुष्टुभ्येताभ्यामेव विपर्यासमा दशमादह्नो दशमस्याह्न ग्राष्टादँष्ट्रस्य लोके नार्मेधं प्रत्यस्मै पिपीषत इति नानदँ षोडशिसाम ६-८-४

ज्योतिष्टोमोऽतिरात्रः षोडशिमानविक्लृप्तो ६-८-५

ग्रथ यदेव कुसुरुबिन्दस्य राथंतरँ सप्तदशमहस्तदेतत्तस्य मैधातिथस्य लोके बृहन्निधनं वार्कजम्भँ रौरवस्य मैधातिथमग्नेरर्कस्य सँहितं गौरीवितमनुष्टुभि यद्वार्हतँ सप्तदशं तदुत्तरं पवमानस्य ते कव इति पर्यासो माधुच्छन्दसस्य लोके कालेयँ स्वाशिरामर्कस्य मौद्मं गौरीवितमनुष्टुभ्येताभ्यामेव विपर्यासमा द्वादशादह्न उद्धरत्युत्तरेभ्यो वार्कजम्भं यथालोकं मैधातिथरौरवे द्वादशस्याह्न

उद्वँशीयान्तान्युक्थानि ९-८-६

ज्योतिष्टोमोऽतिरात्रः षोडशिमान् कौत्सस्य लोक उद्वँशीयमा त्वा विशन्त्विन्दव इत्येतात्वग्निं तं मन्ये यो वसुर्महे नो अद्य बोधय प्रति प्रियतमँ रथमित्येतासु पङ्क्तिषु रायोवाजीयँ संधिषाम ९-८-७

पृष्ठ्यः षडहः समूढो वा व्यूढो वा व्यूढस्त्वेव ९-९-१

ज्योतिष्टोमोऽतिरात्रः षोडशिमानौशनस्यर्त्तु वैश्वज्योतिषमन्त्यं यत्प्र गायतेत्यबोध्यग्निः समिधा जनानामिदँ श्रेष्ठं ज्योतिषां ज्योतिरागादभात्यग्निरुषसामनीकमित्येतासु त्रिष्टुप्स्वौशनँ संधिषाम ९-९-२

बभ्रवे नु स्वतवस इति पुरस्तात्पर्यसस्य षड्टचमामहीयवादुत्तरमाशु भार्गवँ रौरवयौधाजये अन्तरा मैधातिथँ स्वासु सफपौष्कले समानमितरमेतस्यैव राथंतरेण पञ्चदशेन प्र यद्गावो न भूर्णय इति पुरस्तात्पर्यासस्य षड्टचँ हाविष्मतादुत्तरँ स्वारँ सौपर्णम् आयास्ये अन्तरा दैर्घश्रवसं त्वँ ह्यङ्ग दैव्य पवस्व देववीतय इति सत्रासाहीयश्रुध्ये समानमितरमेतस्यैव बर्हातेन पञ्चदशेनैताभ्यामेव विपर्यासमा द्वादशादह्नो नवमस्याह्नः स्वादिष्ठया मदिष्ठयेति गायत्रं चाग्नेश्चार्कौ दशमस्याह्नो यस्ते मदो वरेण्य इति गायत्रं च स्वाशिरां चर्क एकादशस्याभि प्रियाणीति दीर्घतमसोऽर्कोऽन्त्यो द्वादशस्याह्नो ऽन्तरोत्सेधनिषेधौ दैर्घश्रवसं तस्यैवाह्न उद्वंशीयान्तान्युक्थानि ९-९-३

ज्योतिष्टोमोऽतिरात्रोऽषोडशिकः कावस्यर्त्तु वासिष्ठमन्त्यं यदेष प्रकोश इति जनस्य गोपा अजनिष्ट जागृविरेता उ त्या उषसः केतुमक्रताबोध्यग्निर्ज्म उदेति सूर्य इत्येतासु जगतीषु कावँ संधिषाम ९-९-४

यमातिरात्रासु गोष्टोमस्य दैर्घश्रवसस्य लोके कण्वरथंतरं बार्हदुक्थस्य दैर्घश्रवसं गौरीवितमनुष्टुभ्यसोदशिकोऽतिरात्रः आयुष्टोमस्य मैधातिथस्य लोके बृहन्निधनं वार्कजम्भँ रौरवस्य मैधातिथं गौरीवितमनुष्टुभि हारिवर्णस्यर्त्तु सौभरमषोडशिकोऽतिरात्रो ऽभिजितो यथा पूर्दशरात्र एवं बृहती

गौरीवितमनुष्टुभि हारिवर्णस्यर्न्नु सौभरँ षोडशिमानतिरात्रः क्लृप्तो विश्वजित्क्लृप्तः सर्वस्तोमो नवसप्तदशस्याभि सोमास स्रायव इति जनित्रं तिसृषु रौरवमेकस्यां बृहन्निधनम्वार्कजम्भमेकस्यां मैधातिथमेकस्यां यौधाजयमध्यास्यायां गौरीवितमनुष्टुभ्याषोडशिकोऽतिरात्रः ९-१०-१

क्लृप्ता स्राञ्जनाभ्यञ्जनाः ९-१०-२

संवत्सरक्लृप्ताः संवत्सरसंमिता एकषष्टिरात्रं च ९-१०-३

विधृतिभिः क्लृप्ताः सवितुः ककुभो राथंतरेणाह्ना त्रिवृतः प्रतिपद्यते बार्हतेन पञ्चदशान् राथंतरेण सप्तदशान् बार्हतेनैकविँशान् यत्राग्निष्टोमो बार्हतमहर्यौक्ताश्वं मध्यंदिने हाविष्मतमार्भव उद्धरत्यर्कं यो विधृतिषु समानमितरं ९-१०-४

क्लृप्तमा मध्येपृष्ठ्यादा मध्येपृष्ठ्यात् ९-१०-५

मध्येपृष्ठ्यस्य क्लृप्तोऽतिरात्रः क्लृप्तं चतुर्विँशमहराभिप्लविकस्य प्रथमस्याह्नः प्र सोमसो विपश्चित इति गायत्रमाश्वमाशु भार्गवं प्र सोम देववीतय इति पज्रं गौङ्गवं यौधाजयं त एकर्चाः समानमितरं त्रिवृद्द्वितीयस्याह्नः पुनानः सोम धारयेति माधुच्छन्दसमेकस्यां भर्ग एकस्यामैडमायास्यमेकस्यां त्रिणिधन-मायास्यं तिसृषु समानमितरं पञ्चदशं तृतीयस्याह्नः स न इन्द्राय यज्यव इति गायत्रं च वैरूपं च समानमितरं त्रिवृच्चतुर्थस्याह्नस्तवाहँ सोम रारणेति पृश्न्येकस्यामाथर्वणमेकस्यामाभीशवमेकस्यां यौधाजयं तिसृषु समानमितरं पञ्चदशं पञ्चमस्याह्नोऽप्सा इन्द्राय वायव इति गायत्रं च मार्गीयवं च वाम्रेण बृहतीमारभते समानमितरं त्रिवृत् षष्ठस्याह्न एष वाजी हितो नृभिरिति पुरस्तात्पर्यासस्य षड्चँ समनमितरं पञ्चदशं क्लृप्तमा बृहस्पतिस्तोमात् तस्या भीवर्तो ब्रह्मसाम सुज्ञानमुष्णिहि गौरीवितमनुष्टुभि समानमितरं क्लृप्तमेन्द्र-स्तोमात्तस्ये न्द्रक्रतौ श्यैतं गौरीवितमनुष्टुभि समानमितरं क्लृप्तमा व्यूढेभ्यो-ऽग्निष्टोमेभ्यस्तेषां क्लृप्तं प्रथममहर्यथा द्वादशाहम् १०-१

द्वितीयस्याह्न स्तोत्रीयानुरूपौ पर्यासो वृषा पवस्व धारयेति गायत्रं यौक्ताश्वँ स्वारँ सौपर्णं पुनानः सोम धारयेति आयास्ये अन्तरा दैर्घश्रवसं त एकर्चाः समानमितरं त्रिवृत्तृतीयस्याह्न स्त्रोत्रीयानुरूपौ पर्यासः स न इन्द्राय यज्यव इति गायत्रं च त्तुल्लकवैष्टम्भं च समानमितरं त्रिवृच्चतुर्थस्याह्न स्तोत्रीयानुरूपौ पर्यासो नानदस्य लोके गौरीवितँ समानमितरं त्रिवृत्पञ्चमस्याह्न स्तोत्रीयानुरूपौ पर्यासो ऽर्षा सोम द्युमत्तम इति गायत्रमेकस्यां यरावं तिसृषु सोम उ ष्वानः सोतृभिरित्यानूपमेकस्यामग्नेस्त्रिणिधनं विष्टारपङ्क्तौ बार्हद्गिरस्यर्द्धु संतन्यसा-व्यँशुर्मदायेति गायत्रं च गौषूक्तं च पवस्व वाजसातय इति गौरीवितं चर्षभश्च शाक्वरः समानमितरं त्रिवृत् षष्ठस्याह्न स्तोत्रीयानुरूपौ पर्यास इन्द्रायेन्दो मरुत्वत इति गायत्रमेकस्याँ रेवत्यस्तिसृषु मृज्यमानः सुहस्त्येत्यैडमौद्दणोर-न्ध्रमेकस्यं गोष्ठो विष्टारपङ्क्तौ परि स्वानो गिरिष्ठा इति गायत्रं च वैदन्वतं च यन्निधनवत् सोमाः पवन्त इन्दव इति गौरीवितं च क्रौञ्चं च यत्स्वयोनि समानमितरं त्रिवृत् १०-२

सप्तमस्याह्न स्तोत्रीयो नवर्चस्य तृचोऽनुरूपः पर्यासो वृषा पवस्व धारयेति गायत्रमेकस्यां मार्गीयवमेकस्यामैडँ सौपर्णमेकस्यां कारावस्यर्द्धु संतनि यस्ते मदो वरेराय इति गायत्रं चाग्नेश्चार्क उद्धरति द्विपदाः अष्टमस्याह्न स्तोत्रीयो नवर्चस्य तृचोऽनुरूपः पर्यासस्तव त्य इन्दो अन्धस इति गायत्रं च विलम्बसौपर्णं चाभि सोमास आयव इति द्विहिंकारं च गायत्रपार्श्वं च पौरुहन्मनं चाच्छिद्रं च पवस्व देव आयुषगिति गायत्रं च स्वाशिरां चार्को भी नो वाजसातममिति गौरीवितं च त्रिणिधनं च त्वाष्ट्रीषामोद्धरति द्विपदा हिन्वन्ति सूरमुस्त्रय इती-डानाँ संज्ञारोऽन्त्यः समानमितरं त्रिवृन्नवमस्याह्न स्तोत्रीयो दशर्चस्य तृचोऽनुरूपः पर्यासः पवमानो रथीतम इति गायत्रं चादारसृच्च परीतो षिञ्चता सुतमिति पृष्ठं च कौल्मलबर्हिषं च देवस्थानं च दीर्घतमसश्चार्कः सामराजमन्त्यं त्वँ सोमासि धारयुरिति गायत्रं चाश्वसूक्तं च परि त्यँ हर्यतँ हरिमिति गौरीवितं च संकृति चो द्धरति द्विपदा उपो षु जातमप्तुरमिति प्रतीचीनेडं काशीतमन्त्यँ समानमितरं त्रिवृत् १०-३

दशमस्याह्नः पञ्चानामह्नामनुरूपास्त्रय एकर्चा द्वौ तृचाविति बहिष्पवमानमुच्चा ते जातमन्धस इति गायत्रमामहीयवमाभीकं पुनानः सोम धारये-

त्यन्तरोत्सेधनिषेधौ गौरीवितं त एकर्चा ग्रा जागृविरिति यज्ञायज्ञीयमन्त्यम् उद्धरति द्विपदाः समानमितरं त्रिवृदुद्भिच्च वलभिच्च द्वे ग्रहनी तस्योद्भिदो मैधातिथस्य लोके बृहन्निधनम्वार्कजम्भँ रौरवस्य मैधातिथमुभयोर्गौरी-वितमनुष्टुभि समानमितरं क्लृप्तमावृत्तेभ्योऽभिप्लवेभ्य ग्रावृत्तानामभिप्लवानां प्रथमस्याभिप्लवस्य प्रथमस्याह्नो मृज्यमानः सुहस्त्येत्यैडमौद्दणोरन्ध्रमेकस्यां कणवरथंतरमेकस्यां वरुणसामैकस्यां त्रिणिधनमायास्यं तिसृषु समानमि-तरमुद्धरत्युत्तरेभ्यः कणवरथंतरवरुणसामनी तृचक्लृप्ता बृहती सांवत्सरिके गोग्रायुषी तयोरैकाहिके बृहत्यौ १०-४

ग्रस्य प्रत्नामनु द्युतमेते सोमा ग्रभि प्रियँ सोमः पुनानो ग्रर्षति सोमा ग्रसृग्रमिन्दवः पवस्व वृष्टिमा सु नः प्र ते धरा ग्रसश्चतः पवमानस्य ते कवे ऽग्न ग्रा याहि वीतय इत्याज्यानि प्र सोमासो विपश्चित इति गायत्रं चाश्वं च सोमसाम चाग्राशु च भार्गवं मार्गीयवं चाभीकं चै डं च सौपर्णँ रोहितकूलीयं च प्र सोम देववीतय इति पज्रं च द्वैगतं च पौरुहन्मनं च हारायणं च द्वि-हंकारं च गौङ्गवं च यौधाजयं चौशनमन्त्यँ रथंतरं च वामदेव्यं च नौधसं च कालेयं च स्वादिष्ठया मदिष्ठयेति गायत्र सँहिते शैशवं च भासं च काद्मीवतं च जराबोधीयं च पवस्वेन्द्रमच्छेति सफाद्मारे प्र सुन्वानायान्धस इति गौरीवितं च वैश्वामित्रं चासावि सोम इन्द्र त इति यस्य योनिः पदनिधनं च शुद्धाशुद्धीयँ स्वारं च कौत्समौरुद्मयम् ग्रदर्दरत्समसृज इति एतयोरुत्तरमौदल गौतमे कावमन्त्यं यज्ञयज्ञीयमग्निष्टोमसाम १०-५

पवस्व वाचो ग्रग्रियः पवस्वेन्दो वृषा सुतो वृषा सोम द्युमाँ ग्रसि वृषा ह्यसि भानुनैष देवो ग्रमर्त्य इति दशर्चस्य तृचमुद्धरत्युत्तममेष उ स्य वृषा रथ एष वाजी हितो नृभिरेष कविरभिष्टुत उत्ते शुष्मासो ग्रस्थुः पवमानस्य ते वयमग्निं दूतं वृणीमह इत्याज्यानि वृषा पवस्व धारयेति गायत्रं च यौक्ताश्वं च सुरूपं च हरिश्रीनिधनं चाजिगं च स्वारं च सौपर्णं छन्दस्यं च यौक्ताश्वं चर्षभश्च पावमानः पुनानः सोम धारयेति समन्तं च दैर्घश्रवसं च पृष्ठं च यशश्च कौल्मलबर्हिषमायास्ये वृषा शोण इति पार्थमन्त्यं बृहच्च वामदेव्यं च श्यैतं च माधुच्छन्दसं च यस्ते मदो वरेण्य इति गायत्रं च हाविष्मतं च शांमदं च दावसुनिधनं चासितं चाश्वसूक्तं चैष स्य धारया सुतः पवस्व देववीतय इति

शङ्क सुज्ञाने अयं पूषा रयिर्भग इति गौरीवितं चैडं च कौत्सं भर्गश्चासितं च यद्वाहिष्ठीयं च क्रौञ्चे एतेषामेव प्रथमोत्तमे वृषा मतीनां पवत इति याममन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम स्वान्युक्थानि १०-६

दविद्युतत्या रुचैते असृग्रमिन्दवो राजा मेधाभिरीयते तं त्वा नृम्णानि बिभ्रतम् एष धिया यात्यण्व्यासृग्रमिन्दवः पथा पवमाना असृक्षता पघ्नन्पवते मृध इषे पवस्व धारया ग्निनाग्निः समिध्यत इत्याज्यान्युच्चा ते जातमन्धस इति गायत्रं च क्षुल्लकवैष्टम्भं च सौमित्रं चै टतं च साकमश्वं च विलम्बसौपर्णं चाभि सोमास आयव इति पौरुमद्गं च सदोविशीयं च गौतमं चान्तरिक्षं चाच्छिद्रं च मैधातिथं चाष्कारणिधनं च काण्वं तिस्रो वाच इत्यङ्गिरसाँ संक्रोशोऽन्त्यो रथंतरं च वामदेव्यं च महावैष्टम्भं च रौरवं च तिस्रो वाच उदीरत इति गायत्रं च पाष्ठौहमैडँ सैन्धुक्षितमौशन वैरूपे स्वे उष्णिक्ककुभौ सुतासो मधुमत्तमा इति गौरीवितं च साध्रं च श्यावाश्वं च त्रीणि च त्वाष्ट्रीसामान्यैदँ स्वारं त्रिणिधनं पवित्रं त इत्यरिष्टमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम स्वान्युक्थानि १०-७

पवमानो अजीजनत्पुनानो अक्रमीदभि प्र यद्गावो न भूर्नय आशुरर्ष बृहन्मते बभ्रवे नु स्वतवसे प्र स्वानासो रथा इव हिन्वन्ति सूरमुस्रयो ऽग्निर्वृत्राणि जङ्घनदिति होतुराज्यँ स्वान्युत्तराणि पवस्व दक्षसाधन इति गायत्रं चाथर्वणं च निधनकाममदारसृत्सत्रासाहीयं तवाहँ सोम रारणेत्याष्टादँष्ट्रं चार्कपुष्पं च बार्हदुक्थं च माण्डवं च विदावस्विति यस्य निधनमाभीशवं च स्वःपृष्ठं चाङ्गिरसँ सोमः पवते जनिता मतीनामिति जनित्रमन्त्यं बृहच्च वामदेव्यं च त्रैक्रोशं च पृश्नि च परि प्रिया दिवः कविरिति गायत्रं चौर्णायवं च बृहच्च भारद्वाजं मार्गीयवं च यदीनिधनँ स्वे उष्णिक्ककुभौ पुरोजिती वो अन्धस इति गौरिवितं च वार्कजम्भं यदीनिधनँ शुद्धाशुद्धीयं च यदिडाभिरैडमाकूपरं च यन्नवमेऽहन्यान्धीगवं प्र त आश्विनीः पवमान धेनव इति लौशमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम स्वान्युक्थान्युद्धरति षोडशिनम् १०-८

उत्ते शुष्मास ईरत इति पुरस्तात्पर्यासस्य पञ्चर्चम् अग्ने स्तोमं मनामह इति होतुराज्यँ स्वान्युत्तराणि स्वा गायत्री सोमा उ ष्वाणः सोतृभिरिति मानवं चा- नूपं च वैष्णवे च तवाहँ सोम रारणेएतेषां प्रथमे यौक्तस्रुचं

वाम्रमग्नेस्त्रिणिधनमिन्दुर्वाजी पवते गोन्योघा इति संपान्त्या रथंतरं च वामदेव्यं च बार्हद्गिरं च रायोवाजीयं चासाव्यँशुर्मदायेति गायत्रं च संतनि चाध्यर्धेडं च सोमसाम गौषूक्तं च स्वे उष्णिक्ककुबौ पवस्व वाजसातय इति गौरीवितं चर्षभश्च शाक्वरस्त्वाष्ट्रीसाम च यद्द्व्यनुतोदं त्रासदस्यवमष्टेडः पदस्तोभो गोवित्पवस्वेति द्व्यभ्याघातं लौशमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम स्वान्युक्थानि पवस्व देववीरतीति दशर्चस्य तृचमुद्धरत्युत्तममैडमौद्दणोर-न्ध्रमुद्धरति स्वारं वैदन्वतमुद्धरति गौरीवितमनुष्टुभि अथ यदेव पृष्ठ्यस्तोमस्य षष्ठमहस्तदेतत्तृचक्लृप्तं त्रिँशम् १०-९

ये सोमासः परावति प्र स्वानासो रथा इवासृग्रमिन्दवः पथा यवंयवं नो अन्धसाते दक्षं मयोभुवमृतावानं वैश्वानरमिति होतुराज्यँ स्वान्युत्तराणि स्वा गायत्री पुनानः सोम धारयेति सोमसाम च कण्वरथंतरं च पौरुमद्गं च गौगवं च द्विनिधनं चायास्यं प्र काव्यमुशनेव ब्रुवाण इति वाराहमन्त्यँ स्वानि पृष्ठानि यस्ते मदो वरेण्य इति गायत्रं तिसृष्वग्नेरर्क एकस्यां जराबोधीयमेकस्यां दक्षणिधनमेकस्याँ स्वे उष्णिक्ककुभौ पुरोजिती वो अन्धस इति गौरीवितं च कार्तयशं चात्रेयं च गौतमं च द्विपदासु सौहविषम्प्रो अयासीदित्यैडं यज्ञसारथ्यन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम स्वान्युक्थानि १०-१०

हिन्वन्ति सूरमुस्रय एते सोमा अभि प्रियँ सोमः पुनानो अर्षत्युत्ते शुष्मासो अस्थुरया वीती परि स्रव विश्वेभिरग्ने अग्निभिरिति होतुराज्यँ स्वान्युत्तराण्यध्वर्यो अद्रिभिः सुतमिति गायत्रं च वैरूपं चाशु च भार्गवं विलम्बसौपर्णं चाभि सोमास आयव इति द्विहिंकारं च गायत्रपार्श्वं च पौरुहन्मनं च हारायणं चाच्छिद्रमु हु वा इ शिशुमिति वासिष्ठमन्त्यँ स्वानि पृष्ठानि पवस्व देव आयुषगिति गायत्रं तिसृषु स्वाशिरामर्क एकस्यां काक्षीवतमेकस्यां भासमेकस्याँ स्वे उष्णिक्ककुभावभी नो वाजसातममिति गौरीवितं चैडं च कौत्समौदलं च रयिष्ठं च स्वासु धर्म हा उ धर्तेत्यैडँ शार्गमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम स्वान्युक्थानि १०-११

उपो षु जातमप्तुरमेष देवो अमर्त्यः स सुतः पीतवे वृषाया पवस्व धारया पवमानस्य ते कव उप त्वा रण्वसंदृशमिति होतुराज्यँ स्वान्युत्तराणि

पवमानस्य जिघ्नत इति गायत्रं चादारसृच्चेडानां च संह्वार ऋषभश्च पावमानः परीतो षिञ्चता सुतमिति देवस्थानं च संकृति च दैर्घश्रवसं च दीर्घतमसश्चार्को हा उ हु वा अक्रानिति वासिष्ठमन्त्यँ स्वानि पृष्ठानि त्वँ सोमासि धारयुरिति गायत्रं तिसृष्वाश्वसूक्तमेकस्यां प्रतीचीनेडं काशितमेकस्याँ हाविष्कृतमेकस्याँ स्वे उष्णिक्ककुभौ परि त्यँ हर्यतँ हरिमिति गौरीवितं च वाङ्निधनं च क्रौञ्चँ साध्रँ स्वासु विधर्मासावि सोमो अरुषो वृषा हरिरित्यैडं याममन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम स्वान्युक्थान्यथ यदेव छन्दोमवतो दशरात्रस्य नवममहस्तदत्र दशमं तस्य पर्यू ष्विति गौरीवितमेकस्यामौष्णिहमो-कोनिधनमेकस्याँ श्यावाश्वमेकस्यामान्धीगवं तिसृषु समानमितरं महाव्रतं चातिरात्रश्च महाव्रतं चातिरात्रश्च १०-१२

पुरस्तात्पृष्ठ्यस्य क्लृप्तोऽतिरात्रः क्लृप्तं चतुर्विँशमहः क्लृप्तः पृष्ठ्यः क्लृप्तं प्रथममहरभिप्लवस्य यथा मध्येपृष्ठ्ये द्वितीयस्याह्न स्तोत्रीयानुरूपौ पर्यासः परीतो षिञ्चता सुतमिति बृहती समानमितरं त्रिवृत्क्लृप्तं तृतीयमहर्यथा मध्येपृष्ठ्ये चतुर्थस्याह्न स्तोत्रीयानुरूपौ पर्यासः परीतो षिञ्चता सुतमिति बृहती समानमितरं त्रिवृत्क्लृप्तं पञ्चममहर्यथा मध्येपृष्ठ्ये षष्ठस्याह्न पर्यू ष्विति गौरीवितमेकस्यामौष्णिहमोकोनिधनमेकस्याँ श्यावाश्वमेकस्यामान्धीगवं तिसृषु समानमितरं महाव्रतं चातिरात्रश्च महाव्रतं चातिरात्रश्च ११-१

पुरस्तात्पृष्ठ्यस्य क्लृप्तोऽतिरात्रः क्लृप्तं चतुर्वि ँशमहः क्लृप्तः पृष्ठ्यः क्लृप्तं प्रथममहरभिप्लवस्य यथा मध्येपृष्ठ्ये द्वितीयस्याह्न स्तोत्रीयानुरूपौ पर्यासः परीतो षिञ्चता सुतमिति बृहती समानमितरं त्रिवृत्क्लृप्तं तृतीयमहर्यथा मध्येपृष्ठ्ये चतुर्थस्याह्न स्तोत्रीयानुरूपौ पर्यासः परीतो षिञ्चता सुतमिति बृहती समानमितरं त्रिवृत्क्लृप्तं पञ्चममहर्यथा मध्येपृष्ठ्ये षष्ठस्याह्न सोमसाम चाशु च भार्गवं प्र सोम देववीतय इति पञ्चं गौङ्गवं यौधाजयमौशनमन्त्यँ रथंतरं च वामदेव्यं च नौधसं च कालेयं च स्वादिष्ठया मदिष्ठयेति गायत्र सँहिते पवस्वेन्द्रमच्छेति सफाह्वारे प्र सुन्वानायान्धस इति गौरीवितं गौतमं पदनिधनं शुद्धाशुद्धीयं कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम ११-२

पवस्व वाचो अग्रियः पवस्वेन्दो वृषा सुतो वृषा सोम द्युमाँ असि वृषा ह्यसि

भानुनैष उ स्य वृषा रथ उत्ते शुष्मासो अस्थुरया पवस्व धारया पवमानस्य ते वयमग्निं दूतं वृणीमह इत्याज्यानि वृषा पवस्व धारयेति गायत्रं च यौक्ताश्वं च सुरूपं चर्षभश्च पावमानः पुनानः सोम धारयेति पृष्ठं च यशश्च कौल्मलबर्हिषायास्ये वृषा शोण इति पार्थमन्त्यं बृहच्च वामदेव्यं च श्यैतं च माधुच्छन्दसं च यस्ते मदो वरेण्य इति गायत्रँ हाविष्मतमासितमेष स्य धारया सुतः पवस्व देववीतय इति शङ्कुसुज्ञाने अयं पूषा रयिर्भग इति गौरीवितं च भर्गश्चासितक्रौञ्चे वृषा मतीनां पवत इति याममन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम स्वान्युक्थानि ११-३

दविद्युतत्या रुचैते असृग्रमिन्दवो राजा मेधाभिरीयते तं त्वा नृम्णानि बिभ्रतमेष धिया यात्यण्व्यापघ्नन्पवते मृध इषे पवस्व धारया ग्निनाग्निः समिध्यत इत्याज्यान्युच्चा ते जातमन्धस इति गायत्रं च क्षुल्लकवैष्टम्भं च सौमित्रं चैटतं चाभि सोमास आयव इति पौरुमद्गं च गौतमं चान्तरिक्षं च मैधातिथं चाष्कारणिधनं च काण्वं तिस्रो वाच इत्यङ्गिरसाँ संक्रोशोऽन्त्यो रथंतरं च वामदेव्यं च महावैष्टम्भं च रौरवं च तिस्रो वाच उदीरत इति गायत्रं पाष्ठौहमैडँ सैन्धुक्षितँ स्वे उष्णिक्ककुभौ सुतासो मधुमत्तमा इति गौरीवितं च त्रीणि च त्वाष्ट्रीसामान्यैडं स्वारं त्रिणिधनं पवित्रं त इत्यरिष्टमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम स्वान्युक्थानि ११-४

बभ्रवे नु स्वतवस इति षड्चँ सत्रासाहीयं माण्डवं मार्गीयवँ शुद्धाशुद्धीयं तान्युद्धरत्यथ यद् एव पूर्वस्य छन्दोमदशाहस्य चतुर्थमहस्तदेतत्तृचक्लृप्तं त्रिँशं क्लृप्तं पञ्चममहर्यथा मध्येपृष्ठ्ये षष्ठस्याह्नो ऽया वीती परि स्रवेति पुरस्तात्पर्यासस्य तृचमौद्दणोरन्ध्रे अन्तरार्कपुष्पं यच्छन्दस्यं पयश्चतुर्थानि वैदन्वतानि गौरीवितमनुष्टुभ्यथ यदेव पृष्ठ्यस्तोमस्य षष्ठमहस्तदेतत्तृचक्लृप्तँ षट्त्रिँशम् ११-५

ये सोमासः परावति प्र स्वानासो रथा इवासृग्रमिन्दवः पथा प्र यद्गावो न भूर्णय आशुरर्ष बृहन्मते यवंयवं नो अन्धसा ते दक्षं मयोभुवमृतावानं वैश्वानरमिति होतुराज्यँ स्वान्युत्तराणि स्वा गायत्री तस्यां गौषुक्तशाकले पुनानः सोम धारयेति सोमसाम च कण्वरथंतरं च पौरुमद्गं च गौतमं च वाशं च गौङ्गवं

च द्विनिधनं चायास्यं प्र काव्यमुशनेव ब्रुवाण इति वाराहमन्त्यँ स्वानि पृष्ठानि यस्ते मदो वरेण्य इति गायत्रं चाग्नेश्चार्को जराबोधीयं च दक्षणिधनं च स्वे उष्णिक्ककुभौ पुरोजिती वो अन्धस इति गौरीवितं च कार्तयशं च त्वाष्ट्रीसामनी स्वारं चाकारणिधनं चात्रेयं च गौतमं च द्विपदासु सौहविषं प्रो अयासीदित्यैडं यज्ञसारथ्यन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम स्वान्युक्थान्यथ ये एव छन्दोमवतो दशरात्रस्य चतुश्चत्वारिँशाष्टाचत्वारिँशे अहनी ते एते उभयोर्गौरीवित-मनुष्टुभ्यथ यदेव पूर्वस्य छन्दोमदशाहस्य दशममहस्तदत्र दशमम्महाव्रतं चातिरात्रश्च ११-६

विधृतिभिः क्लृप्तं दृतिवातवतोरायनमा त्रिणवेभ्यस्त्रिवृद्भ्य आ उद्धरत्युक्थानि पञ्चदशेभ्यः षोडशिनँ सप्तदशेभ्यो वार्कजंभोद्वँशीये एकविँशेभ्योऽर्का-नुत्सेधनिषेधावुद्वँशीयं तान्युद्धरति चतुर्थं तृचं प्र स्वानासो रथा इवेति पुरस्तात्पर्यासस्य नवर्चमामहीयवादुत्तरं जराबोधीयँ रौरवयौधाजयाभ्यां पूर्वे द्विहिंकारमैधातिथे गौरीवितादुत्तरे शुद्धाशुद्धीयश्यावाश्वे समानमितरमेतस्यैव राथंतरेणैकविँशेनाशुरर्ष बृहन्मत इति पुरस्तात्पर्यासस्य षड्चँ हाविष्मता-दुत्तरमाजिगमायास्याभ्यां पूर्वे समन्तदैर्घश्रवसे गौरीवितादुत्तरे मधुश्चुन्निध-नासिते समानमितरमेतस्यैव बार्हतेनैकविँशेनैताभ्यामेव विपर्यासं मासमा-हरति चतुर्थं तृचमुभौ पर्यासावाशुभार्गवादुत्तरं मार्गीयवं द्वैगतं मध्ये बार्हतानाँ सँहितादुत्तरे काक्षीवतभासे समानमितरमेतस्यैव राथंतरेण त्रिणवेनापघ्नन्पवते मृधो ऽया पवस्व धारयेति पुरस्तात्पर्यासस्य तृचे स्वारात्सौपर्णादुत्तरँ हरीश्रिनिधनमर्कपुष्पं मध्ये बार्हतानां मौक्षादुत्तरे शांमदं च दावसुनिधनं च समानमितरमेतस्यैव बार्हतेन त्रिणवेनैताभ्यामेव विपर्यासमेकोनत्रिँशतमहानि महाव्रतं विशुवानथैत एव मासा आवृत्तास्तैरेवावृत्तैरुत्तरान्षण्मासाँ-स्तेषामेकान्नत्रिँशि प्रथमो ११-७-१

दृतिवातवतोरयनेन क्लृप्तं कुण्डपायिनामयनमा दशरात्रात्प्रज्ञातो दशरात्रः प्रज्ञातं व्रतं प्रज्ञातोऽतिरात्रो ११-७-२

गवामयनेन क्लृप्तं तपश्चितामयनं ज्योतिष्टोमेन वाविक्लृप्तेन ११-७-३

दृतिवातवतोरयनेन क्लृप्तं प्रजापतेर्द्वादशसंवत्सरँ षट्त्रिँशत्संवत्सरं शतसंवत्सरं ११-७-४

ज्योतिष्टोमेनाविक्लृप्तेन क्लृप्तमग्नेः सहस्रसाव्यं गौरीवितस्वरेण वा ११-७-५

प्रथमस्य सारस्वतस्य षोडशिमन्तावतिरात्रावनुब्राह्मणं क्लृप्तमिष्ट्ययनमैकाहिके गोश्रायुषी अविक्लृप्ते अतिरात्रादुत्थानं ११-८-१

द्वितीयस्य सारस्वतस्य षोडशिमन्तावतिरात्रौ दृतिवातवतोरयनेन क्लृप्ते त्रिवृत्पञ्चदशे अग्निष्टोमस्त्रिवृदुक्थ्यं पञ्चदशँ राथंतरं त्रिवृद्बार्हतं पञ्चदशमैकाहिके गोश्रायुषी गौरीवितस्वरे अतिरात्राद्राथंतराद्राथंतरं त्रिवृदहरुपयन्ति राथंतरस्याह्नः प्रत्नवती बृहती तेनाजामि यत्र बार्हतादह्नो गामुपयन्ति गोर्यथा यमातिरात्रास्वेवं बृहती यत्र गोर्बार्हतमहरुपयन्ति बार्हतस्याह्नः पुनानः सोम धारयेत्यैडमायास्यमेकस्यां कण्वरथंतरमेकस्यां दैर्घश्रवसमेकस्यां त्रिणिधनमायास्यं तिसृषु यत्र राथंतरादह्न आयुरुपयन्त्यायुषो यथा यमातिरात्रास्वेवं बृहती यत्रायुषो राथंतरमहरुपयन्ति राथंतरस्याह्नः प्रत्नवती बृहती तेनाजाम्यतिरात्रादुत्थानं ११-८-२

तृतीयस्य सारस्वतस्य षोडशिमन्तावतिरात्रावैकाहिकास्त्रिकद्रुका विश्वजिदभिजितौ च गौरीवितस्वरा अतिरात्राद्राथंतराद्राथंतरं ज्योतिरुपयन्ति ज्योतिषः प्रत्नवती बृहती तेनाजामि यत्र गोरभिजितमुपयन्त्यभिजितो यथा यमातिरात्रास्वेवं बृहती यत्राभिजितो ज्योतिरुपयन्ति ज्योतिषः प्रत्नवती बृहती तेनाजामि यत्र वायुरायुषो यथा यमातिरात्रास्वेवं बृहती यत्र ज्योतिषो वायुरायुषो वा विश्वजितमुपयन्ति विश्वजितो ऽस्यप्रत्ना गायत्री यत्र विश्वजितो गामुपयन्ति गोर्यथा यमातिरात्रस्वेवं बृहती तेनाजाम्यतिरात्रादुत्थानम् ११-८-३

उपायक्लृप्ते दार्षद्वततौरे ११-८-४

सर्पसत्रस्य षोडशिमन्तावतिरात्रौ ११-८-५

जनुषैकर्चयोः सफपौष्कले श्यावाश्वस्य लोके गौरीवितँ समानमितरं विराजा द्वन्द्वेन सर्वो दशी ११-८-६

पवस्व वाचो अग्रिय उत्ते शुष्मासो अस्थुः पवमानस्य ते कवे ऽग्निं दूतं वृणीमह इत्याज्यानि वृषा पवस्व धारयेति गायत्रमेकस्यां यौक्ताश्वमेकस्यामृषभः पावमान एकस्याँ स्वारं च सौपर्णं पुनानः सोम धारयेत्यैडमायास्यमेकस्यां त्रिणिधनमायास्यं तिसृषु वृषा शोण इति पार्थमन्त्यं बृहच्च वामदेव्यं च श्यैतं च कालेयं च यस्ते मदो वरेण्य इति गायत्रं च हाविष्मतं च पवस्वेन्द्रमच्छेति सत्रासाहीय श्रुध्ये अयं पूषा रयिर्भग इति गौरीवितमेकस्यां क्रौञ्चमेकस्यामर्कपुष्पमेकस्यां यच्छन्दस्यं वृषा मतीनां पवत इति याममन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम सर्वो दशि ११-९-१

एताभ्यामेव विपर्यासँ षण्मासाँस्तेषामेकान्नत्रिँश्युत्तमः ११-९-२

पवस्व वाचो अग्रिय उपास्मै गायता नरो दविद्युतत्या रुचा पवमानस्य ते कवे ऽग्न आयाहि वीतय इति रथंतरं त्रीणि बार्हतान्यग्निं दूतं वृणीमह इत्युभयान्याज्यानीति वोच्चा ते जातमन्धस इति गायत्रमेकस्यां गौषूक्तमेकस्याँ सत्रासाहीयमेकस्यां पुनानः सोम धारयेति समन्तमेकस्याँ सँसर्पमेकस्यां यत्तृतीयं दैर्घश्रवसमेकस्याँ रथंतरं तिसृषु वृषा शोण इति पार्थमन्त्यं बृहच्च वामदेव्यं च श्यैतस्यर्त्तु सँसर्पं यत्प्रथमं स्वासु कालेयँ स्वादिष्ठया मदिष्ठयेति गायत्रं चाश्वसूक्तं च पवस्वेन्द्रमच्छेति सफ श्रुध्ये प्रुअोजिती वो अन्धस इति गौरीवितमेकस्यां तस्यामेवान्धीगवँ सँसर्पं तिसृषु यद्द्वितीयँ सूर्यवतीषु कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम सर्वो द्वादशः ११-१०-१

अथैते एव पूर्वे अहनी आवृत्ते ताभ्यामावृत्ताभ्यामुत्तरान्षण्मासाँस्तेषामेकानत्रिँशि प्रथमः ११-१०-२

त्रिसंवत्सरस्य गवामयनेन क्लृप्तः प्रथमः संवत्सर आदित्यानामयनेन द्वितीयोऽङ्गिरसामयनेन तृतीयो ११-१०-३

बृहस्पतिसवेनाविक्लृप्तेन क्लृप्तं प्रजापतेः सहस्रसंवत्सरं गौरीवितस्वरेण वा ११-१०-४

दृतिवातवतोरयनेन क्लृप्तं विश्वसृजामयनं ज्योतिष्टोमेन वाविक्लृप्तेन ज्योतिष्टोमेन वा यथास्तोमक्लृप्तेन यथास्तोमक्लृप्तेन ११-१०-५